विशेषणवर्जितं वहुवचनं त्रित्वस्यैव बोधकम्। अर्थात् त्रयः कपिञ्जलाः आलम्भनीयाः। तद्वदत्रापि त्रयः दत्तकपुत्रत्वेन ग्राह्याः। अन्यथा अनवस्थादोष आपद्येत्। एवं स्त्रीकर्तृक दत्तकग्रहणे पत्युरनुमतेरपेक्षा वर्त्तते। अपेक्षिता च स्त्रीकर्तृकेच्छा। एकदा इच्छा प्रकटिता लब्धा च अनुमतिः किन्तु दत्तकग्रहणं न सम्पन्नम्। पुनरपि तदेव भवति। पुनरपि। तर्हि अनुमतित्रयेण दत्तकत्रयग्रहणमस्तु। न। तेन असूतेन इति विशेषणस्य जागरूकत्वात्।

दत्तकग्रहणात् प्राक् दत्तकप्रागभावः। दत्तकग्रहणे एवमनुमतिं दत्त्वा म्रियते चेत् नासौ अपुत्र इति वक्तुं शक्यते--तत्र भविष्यद्दत्तकप्रागभाव एव कारणम्। सा चेयमनुमतिः साक्षात् असाक्षात् वा ग्रहीतुं शक्यते। पत्न्याः प्रार्थनया भर्त्ता तुष्णीमास्ते चेत् अप्रतिषिद्धं परमतम् अनुमतं भवति। अर्थात् मौनं सम्मतिलक्षणम्। पश्चात् पत्न्याः पुनः प्रार्थनया पतिः कन्ठतः स्वीकरोति इति वारद्वयमनुमतिर्लब्धा इति कृत्वा दत्तकद्वयं ग्राह्यम् इत्यपि न।

(9b) (acceptance of separate representatives) is not sanctioned by scriptures. In the absence of the principal item of substitute is prescribed in the texts. Here also this is intended. If according to the multiplicity of actions, as in a major ritual, owing to necessity, multiplicity of priests is felt, many sons may be taken in adoption—if this is said, still then, according to the decision arrived at in the Kapinjala-adhikaraṇa (of the Mīmāṃsāsūtras, XI. 1.38-46 plural number without any special adjective should mean only three, so many sons may be taken in adoption comes to mean) only three sons may be taken in adoption. Otherwise this will lead to the technical defect called *'anavasthā'* (absence of finality or conclusion, endless series of statement). Thus in the case of adoption by women by permission given once to have one son—even three sons may be taken and not that for several sons several permissions are to be taken. For in that case the adjective *'asutena'* (by one who is son-less) in singular would be useless. In fact it is the permission in such cases of adoption that is the seed and without the seed how can there be advent of fruit ? So if a man dies after giving permission (to his spouse to take a boy in adoption) the duties of a son may be done to him and the man cannot be called son-less. Because in such contingency the antecedent non-existence *(prāgabhāvā)* of the adopted son

stand in the way to in the case of Kṣetraja sons like Yudhiṣṭhira.

(9b) কল্পনা করা অশাস্ত্রীয় হইয়া যায়। মুখ্যবস্তুর অভাবে প্রতিনিধি গ্রহণ বিধি শাস্ত্র সম্মত, এস্থলেও তাহা বোঝান হইয়াছে বলিয়া (পূর্বোক্ত কল্পন অনুচিত)। যদি কর্মের বহুত্ববশতঃ অনেক প্রতিনিধি করিতে হয়, যেমন কোনও বৃহদ্ যজ্ঞের সময় প্রয়োজনবশতঃ অনেক ঋত্বিক্ উপস্থিত থাকেন, তদ্রূপ কর্মবাহুল্য বশতঃ বহু দত্তক গ্রহণ করা উচিত (এইরূপ বলা হয়—তবে) মীমাংসাসূত্রের কপিঞ্জলাধিকরণ (মীমাংসা সূত্র XI.1.38.46) সিদ্ধান্ত অনুযায়ী বিশেষণহীন বহুত্ব ত্রিত্বের বোধক হইবে (অর্থাৎ বহবঃ কার্যাঃ বলিলে তিনজন দত্তক গ্রহণ করা যাইবে)—অন্যথা (কতপরিমাণ গ্রহণ করা উচিত তাহা নিরূপিত না হওয়ায়) অনবস্থা দোষ হইবে। এইরূপে স্ত্রীলোক যদি দত্তক গ্রহণ করে সে স্থলে একটি পুত্রলাভের ইচ্ছার প্রযোজিকা একটি অনুমতি দ্বারা তিনজন দত্তকও গ্রহণ করা যায়। এক একটি দত্তকপুত্র গ্রহণের জন্য এক একবার অনুমতি প্রাপ্তির প্রয়োজন নাই। কারণ সেক্ষেত্রে *অসুতেন* ইত্যাদি শ্লোকের অসুতেন এই বিশেষণটি ব্যর্থ হইয়া যায়। এস্থলে দত্তক গ্রহণের ব্যাপারে স্ত্রীকর্তৃক স্বামীর অনুমতি গ্রহণটিই বীজ। বীজ না থাকিলে কীভাবে ফলের উদ্ভব হইবে? তাই স্ত্রীকে অনুমতিদান করিয়া স্বামীর মরণ হইলেও তাহার প্রতি পুত্র দ্বারা করণীয় কর্মসমূহ যুক্ত হইতে পারে। অতএব সেই অবস্থাতে তাদৃশপুরুষ অপুত্রক ইহা বলা যায় না কারণ অনুমতি দানের দ্বারা ভাবী যে দত্তকপুত্র তাহার প্রাগভাব সেইরূপ কথনের প্রতিবন্ধক হইবে [দত্তকপুত্র প্রাগভাব অর্থাৎ দত্তকবিধি অনুযায়ী দত্তক গ্রহণের পূর্বের অবস্থা। যখন অনুমতি প্রদত্ত হইয়াছে তখন দত্তকপুত্র হইবে—কিন্তু বিধি অনুযায়ী তাহাকে যতক্ষণ গ্রহণ করা হয় নাই ততক্ষণ সেই অবস্থাই দত্তকপুত্র প্রাগভাব] এই ভাবে যুধিষ্ঠির প্রভৃতি ক্ষেত্রজ পুত্র—

## 17. মূলম্

**(10A) পঞ্চানাং প্রযোজনানন্যত্বাদনুষ্ঠানানন্যত্বেন পঞ্চকরণং ন দোষায়। অত্র প্রযোজনভেদস্তু[23]-- তত্র প্রযোজনভেদস্তু ব্রাহ্মণীশাপাভিভূতস্য পাণ্ডোঃ স্বয়ং প্রজন (ন)া সামর্থ্যাত্তদনুজ্ঞয়া কুন্ত্যাং ধর্ম্মাত্ যুধিষ্ঠিরে জাতে তস্যাতিধার্ম্মিকত্বেন রাজধর্ম্মে চ হিংসা বহুত্বে অযোগ্যভিয়া অনুমত্যন্তরেণ বায়োর্ভীমস্তস্যাতিবলগর্ব্বিতত্বেন ন্যায্যান্যায্যজ্ঞানবহির্ভাবাত্ অনুমত্যন্তরেণ ইন্দ্রাত্**

23. অযমংশঃ অধিকত্বাত্ বর্জনীযঃ। মন্যে লিপিকালে আপতিতঃ।

**फाल्गुनिर्जातः। एवं माद्र्यामपि स्वत..तः[24] (? स्वतल्पतः) पित्राद्युपकारार्थमिति प्रयोजनभेदाः। तथाच असुतेन द्वादशविधपुत्ररहितेन पुंसा दत्तकः कार्यो न तु सपुत्रेणेति। यदि च माद्रीवत् पत्नीनामनुरोधेन वहवोऽपि इष्टा भवन्ति तदाप्येकेच्छया त्रयोऽपीति ज्ञेयम्। एवमनुमत्यैकोऽपि बोद्धयम्। अधिके जातेऽपि दत्तके यदि पातित्याद्यवधारणेन--**

**दीप्तिः**

**(10a)** अत्रेयं शङ्का। यदि अनुमतिः सकृदेव दीयते कथं तर्हि भारते युधिष्ठिरादि-- क्षेत्रजानां पञ्चकत्वं सिद्धति। अत्रोच्यते प्रयोजनवशात् पञ्चकरणं न दोषाय। प्रयोजनं चात्र राज्यरक्षणम्। युधिष्ठिरश्च दुर्बलः, भीमो निष्ठुरः। अर्जुनः पुनः समीचीनः। उक्तञ्च प्रयोजनापेक्षाया एका स्त्री वारत्रयं क्षेत्रत्वम् उपेयात् तदधिके व्यभिचारदोष आपतति। अतः कुन्त्या वारत्रयमेव गर्भमूढम्। मद्रराजपुत्र्याः पितृणां जलपिण्डादिरक्षणं न तु युधिष्ठिराद्यधीनम् अतस्तस्यापि क्षेत्रजद्वयम्। कुन्त्या च मन्त्रं सकृदेव प्राप्तः माद्र्या च सकृदेव मन्त्रेण अश्विकुमारयुगलगमनम् अतस्तस्या युगलौ उत्पन्नौ। एवं दत्तकविधौ सकृदेव अनुमतिः प्रदेया। अधिके जाते पातित्याशङ्का।

**(10a) Five such sons were procured by levirate owing to different (normal) reasons and therefore in such case no stigma is imposed. The difference in reason/cause is as follows : When king Pāṇḍu was cursed by a brahmin lady he became incapable of procreating (his own son) and by an act of permission given by him Yudhiṣṭhira was born of Dharma in Kuntī. But he was too much pious (and therefore averse to violence) and royal duties had in them plenty of violence and therefore he was found unfit (to become a king) and for this by another permission Bhīma was born in Kuntī from the Windgod (Vāyu). But he was puffed up by his extra-ordinary strength and had no idea of the proper and the improper acts (and was therefore found unfit to be a king and therefore) by another permission Arjuna was born from Indra in Kuntī. And in this way even in Mādrī also (from her**

24. कृतेऽपि यत्ने पाठोद्धारो न जातः। स्वतल्पतः इति पाठे कथञ्चित् अर्थसङ्गतिः स्यात् इति स एव गृहीतः।

bed ie. womb ?) for rendering (spiritual) benefit to her (own) ancestors.

And so *'asutena'* (by a son-less) means by a man who does not have (even) one of the twelve types of sons (and by him) a son may be taken in adoption and not by one having a ṣon. If, however, several sons are desired by the request of wives, as was done in the case of Mādrī, even then by the desire of one (at most) three sons may be procured. The same principle is to be understood with reference to one permission.

If several sons are born and owing to *pātitya* (apostasy-degradation)—

(10a) (ক্ষেত্রজপুত্র) পাঁচজনের প্রয়োজনের বৈশিষ্ট্যহেতু (ক্ষেত্রজত্বস্বীকাররূপ) অনুষ্ঠান ও অনন্য (তাই) পাঁচটি ক্ষেত্রজ পুত্র করণ দোষের কারণ হইতে পারে না। [এখানে প্রয়োজনভেদে ] (এই প্রকার) সেখানে প্রয়োজন ভেদ হইল—ব্রাহ্মণীর শাপে অভিভূত রাজা পাণ্ডু নিজে পুত্রোৎপাদনে অক্ষম হওয়ায় তাহার অনুমতিতে ধর্ম হইতে কুন্তীতে যুধিষ্ঠিরের জন্ম। (কিন্তু) সে অতি ধার্মিক বলিয়া এবং রাজকার্যে হিংসার বাহুল্য থাকায় (রাজপদে) সে অযোগ্য এই ভয়ে আর একবার অনুমতি দিয়া (কুন্তীতে) বায়ু হইতে ভীম (জাত) হইল। সেও অতিবলগর্বিত হওয়ায় ন্যায্যান্যায্য জ্ঞানশূন্য হওয়াতে (তাহারও রাজা হওয়া অনুচিত বিধায়) আর একবার অনুমতি নিয়া (কুন্তীতে) ইন্দ্র হইতে অর্জুনের জন্ম। এইভাবে মাদ্রীতেও -------পিত্রাদির উপকারের জন্য এই প্রয়োজনভেদ।

আবার অসুতেন অর্থাৎ দ্বাদশবিধপুত্ররহিত জনের দ্বারা দত্তক করণীয়, পুত্রযুক্ত জনের দ্বারা নয়। যদি বা মাদ্রীর ক্ষেত্রে যেমন হইয়াছে তদ্রূপ পত্নীদের অনুরোধে অনেকপুত্র অভীপ্সিত হয় তখনও একজনের ইচ্ছাতেই (সর্বসঠিক) তিনজন পুত্রই কাম্য-ইহা জ্ঞাতব্য। এই ভাবে অনুমতি একবার দেওয়া হইলেও—জ্ঞেয়। অধিকপুত্র যদি হয় তাহাদের পাতিত্য নিরূপণ করিয়া (তাহাদের দ্বারা বেদ বিহিত কর্ম করান যায় না এমন অবস্থা হয় তখন অন্য দত্তকপুত্র গ্রহণ করা উচিত)—।

## 18. मूलम्

**(10B) वैदिकादि कर्म्मानिर्वाहस्तदा दत्तकान्तरं करणीयं, यज्ञादिकृतेव ऋत्विजि विपन्ने प्रोषिते वा ऋत्विगन्तरकरणवदिति। अत्रापुत्रादिपदं प्रपौत्र पर्य्यन्ताभावपरम्। त्रयाणामेव पार्वणपिण्डदानौर्द्धदेहिकादि क्रियातुल्योपकारकत्वात्। ''पितुःपुत्रेण कर्त्तव्या पिण्डदानादिका क्रिया। तदभावे तु पत्नीस्यात्तदभावे सहोदरः''-- इति शंख्यवचने, ''पत्नीदुहितरश्चैव पितरौ भ्रातरस्तथा''-- इत्याद्यभिधाय स्वर्यातरयह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिरिति याज्ञवल्क्यवचनेन। (याज्ञवल्क्य 2.135,136.) अपुत्रधनं पत्न्यभिगामीत्यादि, विष्णूसूत्रे[25] चापुत्रपदस्य प्रपौत्रपर्य्यन्ताभावस्यावश्यं वाच्यत्वेन सर्वजनसिद्धत्वात् प्रागुक्तमनुयाज्ञ-वल्क्यवचनयोस्त्रयाणां परमोपकारदर्शनात् त्रयाणां तुल्यत्वेन प्रपौ(त्रप)र्य्यन्त रहितेनैव पुंसा दत्तकः करणीयेति (करणीय इति) साधीयः**

**दीप्तिः**

(10b) एवमपि भवति। यज्ञानुष्ठानमध्ये ऋत्विगुपरमते चेत्, कार्य्यं परिहाय प्रतिष्ठते वा तत्र कार्य्यसमाप्त्यर्थम् अपरः आनीयते-तद्वत् वैदिककर्मसमापनार्थम् अन्ये दत्तकाः करणीयाः अत्रोत्तरं नेति। सकृत् दत्तकविधिरनुष्ठितश्चेत् प्रपौत्रपर्य्यन्तं दत्तकग्रहीतुः सपुत्रता आपद्येत। त एव पिण्डदानादिकं कुर्य्युः- पुत्रपदेन प्रपौत्र पर्य्यन्तानां ग्रहणसामर्थ्यात्। शङ्खवचनेन याज्ञवल्क्यवचनेन च प्रपौत्रपर्य्यन्तभावे धनं यथा पत्नीसहोदराभिगामि भवति तद्वत् पिण्डदानादिकार्य्यं तैरेव। एकयोगनिर्दिष्टानां सहैव प्रवृतिः सहैव निवृत्तिः। अतो धनविषये या विहिता पिण्डदानादावपि सैव

---

25. विष्णु धर्मसूत्रे दायभाग प्रकरणे "सदृशं" वचनं स्पष्टतया नास्ति। दत्तकमीमांसायां तु ''अपुत्रेनेतिपुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम्।'' ''पुत्रेणलोकान्जयति पौत्रेणानन्त्यमश्नुते''। अथपुत्रस्य पौत्रेनब्रध्न स्याप्नोति पिष्टकम्-इत्यादि (मनु 9.137)॥--दत्तकमीमांसा (यम भरत शिरोमणि सं) -पृ-6 दत्तकचन्द्रिकायामपि अत्र पुत्रपदं पौत्र प्रपौत्रयोरप्युपलक्षणम्। तयोरपि पिण्डदातृत्व वंशकरत्व विशेषात्। अन्यथा सत्यपि पौत्रे मृतपुत्रस्य निर्निमित्त पुत्रपरिग्रहापत्तिः। दत्तकचन्द्रिका सं (व्ययम भरत शिरोमणि-) पृ -2-3॥ विष्णु धर्मसूत्रे (xvii. 214) पैतामहेत्वार्थे पितृपुत्रयोस्तुल्यं स्वामित्वम्। and अपुत्रधनं पत्त्याभिगामी नन्दपण्डित in the केशववैजयन्ती टीका quots देवल- अविभक्त विभक्तानां कुल्यानां वसतां सह। भूयो दाय विभागः स्यात् आचतुर्थादिति स्थितिः... इति देवालेनापि प्रपौत्रस्यापि दायसम्बन्धाभिधानात्। and from मनु- त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थःसम्प्रदाचैषां पञ्चमो नोपपद्यते॥

विहिता। दत्तकपुत्रः पतित श्चेत् दत्तकान्तरं स्वीकरणीयम्। यज्ञादौ ऋत्विगभावे ऋत्विगन्तरग्रहणवत्। एतेन असुतेन सुतः कार्य इत्यादिवचनेविरोधो नागतः। तत्र अपुत्रशब्दस्य-कर्मानर्हपातित्यादिदोषहीनपुत्राभाववान् इत्यर्थः। अयञ्च पुत्राभावः पुत्रपौत्रप्रपौत्र पर्यन्तः। पार्वणश्राद्धे त्रैपुरुषिक श्राद्धस्य विधानम्। पिण्डोदकक्रियादौ च पुत्रस्य प्रथमेवाधिकारः। तस्याभावे न नामसङ्कीर्तनम्। पत्न्या भ्रात्रा वा मृतस्य केवलं श्राद्धं सपिण्डीकरणञ्च भवति। भ्राता यदा पार्वणश्राद्धमातनुते तदा तस्य स्वपितुः पितामहस्य प्रपितामहस्य श्राद्धमेव स कुरुते। सपिण्डीकरणादूर्द्ध मृतस्य तथाविधस्य पार्वणादिकं न। पुत्रेण क्रियते चेत् तद्भवति। अतो दत्तकपुत्रेणापि पिण्डोदकक्रियावंशनामकीर्त्तनञ्च उभावपि निर्वाह्येते॥

(10b) of them, performance of Vedic and other rituals does not become possible then another adopted son is to be procured (and such works be accomplished by him) in the manner a ritual is completed by a second priest in the event of (sudden) demise or default (or absence due to sojourn) of the (original) priest who started the work. Here the word *aputra* etc. means absence of male issue upto the level of great grand son, because these three (son, grandson and great grandson) indeed can render equal spiritual benefit for the dead by *pārvaṇa śrāddha, piṇḍadāna (ekoddiṣṭa)* and other funerary rites after death. "By a son would be offered *piṇḍa* to his father and other such works, in his absence the wife and in her absence the uterine brother shall do that." In this sanction of the sage Śaṅkha and 'wife, daughters, parents and brothers'—enumerating these and others "of the deceased son-less this is the principle to be followed with respect to persons of all castes" (Yaj 2.135a, 136b)—in this enumeration of Yājñavalkya the property of the son-less man goes to his wife etc. and in the *Viṣṇu (dharma)sūtra* also the word *aputra* (son-less) [it has been said] must be taken in the sense of absence of issue upto the level of great grand sons (and) that being accepted by all (and) the above quoted word of Manu, Yājñavalkya all these three generations having been found as greatly beneficial (to the departed) (and) all of them being equal (in this respect), only a man having absence of male issue upto the level of great grandson can adopt a son this (conclusion) is better.

(10b) (পাতিত্য নিরূপণহেতু) তাহাদের দ্বারা বৈদিক কর্মসম্পাদন সম্ভব না হয় তবে আর একটি দত্তক গ্রহণ করিতে হইবে, যজ্ঞ অনুষ্ঠানকারী ঋত্বিক্ (অকস্মাৎ যদি) উপরত হন বা অন্যত্র চলিয়া যান তখন অন্য ঋত্বিক্ আনিয়া তাহার দ্বারা যেরূপ কার্যসম্পাদন করা হয় (তদ্রূপ দত্তক গ্রহণ করিয়া কার্য করিতে হইবে)। এস্থলে অপুত্রাদি পদের দ্বারা প্রপৌত্রপর্যন্ত অভাব বুঝিতে হইবে (অর্থাৎ কোনও পুরুষের পুত্র, পৌত্র, প্রপৌত্র না থাকিলে তবেই তাহাকে অপুত্র বলা যাইবে)— কারণ পুত্র, পৌত্র, প্রপৌত্র পার্বণশ্রাদ্ধ, পিণ্ডদান (একোদ্দিষ্ট) ও ঔর্ধ্বদৈহিক ক্রিয়া প্রভৃতির দ্বারা মৃতপুরুষের সমান উপকার করিতে পারে। পুত্রের দ্বারা মৃতপিতার পিণ্ডদানাদি শ্রাদ্ধকর্মাদি কর্ম করণীয়। পুত্র না থাকিলে পত্নী, তাহারও অভাবে সোদর ভ্রাতা (এই কার্য করিবে) এই শঙ্খ প্রোক্ত বচনে এবং "পত্নী, কন্যাগণ, পিতামাতা এবং ভ্রাতৃগণ" এইরূপ বলিয়া "মৃত অপুত্র পুরুষের" সকলবর্ণে ইহাই বিধি—এই যাজ্ঞবল্ক্যবচনের (2.135a, 136b)

(যাজ্ঞবল্ক্যবচনের দ্বারা)— অপুত্রের ধন তাহার পত্নী পায় এবং বিষ্ণু (ধর্ম) সূত্রে অপুত্র অপুত্রপদের দ্বারা প্রপৌত্রস্তর পর্যন্ত (পুরুষের) অভাব অবশ্যই কল্পনীয় এইরূপ ব্যাখ্যা সর্বজনসিদ্ধ হওয়ায় পূর্বোক্ত মনু যাজ্ঞবল্ক্য বচনদ্বয়ে পুত্র, পৌত্র, প্রপৌত্র এই তিনজনের উপকারসাধনত্ব দেখা যায় বলিয়া উল্লিখিত পুত্র, পৌত্র, প্রপৌত্র এই তিনজনের অভাব থাকিলেই তাদৃশ পুরুষ দত্তক সন্তান গ্রহণ করিতে পারিবে ইহাই গ্রাহ্য।

## 19. মূলম্

**(11A) দৃষ্টশ্চ বৈষ্ণবে[26] ব্রহ্মশাপাভিভূতরাক্ষসসৌদাসনৃপভক্ষিতশতপুত্রশোকেন মরণোদ্যতং বশিষ্ঠং ছায়েবানুগপুত্র্যাশক্তিপত্ন্যাঃ [? ছায়েবানুগপুত্রশক্তিপত্ন্যাঃ] স্নুষায়াঃ গর্ভস্থপুত্রেণোচ্চরদ্বেদধ্বনিং শ্রুত্বা পশ্চাদবলোককং (- অবলোক্য চ) শ্বশুরমাহ 'মা মরণায় যাহীতি' 'পৌত্রস্তে মমোদরবর্ত্তী' তি শ্রুত্বা পুত্রপৌত্রয়োস্তুল্যত্বমিতি জ্ঞানেন মরণান্নিবৃত্তে বশিষ্ঠে তদ্ গর্ভাত্ পরাশরাখ্যঃ শক্তিপুত্রো জাতস্তেনৈব পুত্রকার্যনির্বাহশ্চ ত(দ)র্থমেব পরাশর ইতি নাম চক্রে পিতামহঃ। পরস্য মৃতকল্পস্য বশিষ্ঠস্য অশরো মরণনিবৃত্তিরূপমহিংসনং যস্মাত্**

---

26. ¯H.H. Wilson সম্পাদিতে তথা আংগলভাষায়ামনুদিতে বিষ্ণুপুরাণে সংস্করণান্তরেষু চ শক্তিপত্ন্যাঃ যথা নাস্মাকং দৃষ্টিপথমায়াতি। কিন্তু মহাভারতে আদিপর্বণি লভ্যতে ইয়ং কথা। মহাভারত (B.O.R.I edn) I. 167. 4-15.

(इति)। शृहिंसायामित्यस्य रूपम्। एवंच अपुत्रस्य गतिर्नास्तीत्यादि-कमप्येतदर्थकमेव बोद्धव्यम्।। न चैवम् अपुत्रस्य गतिर्नास्ति इति धर्म्मो विनिश्चितः। औरसैर्भ्रातृपुत्रैर्वा पुत्रवन्तो दिवंगताः।। इति कालिकापुराणात्[27] (कालिकापुराण 89.6)।

**दीप्तिः**

(11a) प्राप्तकाले पिण्डोदकादिनिर्वाहो यथा सुसम्पन्नो भवेत् तदर्थं गर्भस्थपौत्रोऽपि प्रमाणम् इति सूचयितुमेका कथा अवतारिता। ब्रह्मशापात् राक्षसत्वमापन्नेन सौदासनृपेण वशिष्ठस्य महर्षेः पुत्रशतं भक्षितम्। शोकार्त्तो महर्षिर्यदा मरणोद्यतोऽभूत् तदा तस्य स्नुषा स्वगर्भस्थपुत्रेणोच्चरद् वेदध्वनिं श्रुत्वा मरणात् श्वशुरं निवारयामास। वशिष्ठोऽपि पौत्रं शक्रिपुत्रं पराशर इति नाम्ना भुषयामास। परस्य अर्थात् मरणोद्यतवशिष्ठस्य अशरः अहिंसनं मरणनिवृत्तिरूपं यस्मात् स इति वहुव्रीहौ पराशरपदं सिध्यति। शृ हिंसायाम् इति धातुः। पुत्रपौत्रयोः पिण्डोदकक्रियादौ तुल्यत्वम् इति ज्ञातवांश्च।

(11a) It is found in the Vaiṣṇava text *(Viṣṇupurāṇa)* that when king Saudāsa having been transformed into a Rākṣasa by the curse of a brahmin devoused up all the hundred sons of Vaśiṣṭha, the latter was about to commit suicide (at the extinction of his family) and his daughter-in-law, wife of his son Śaktri followed him like (his) shadow, listening to the chanting of Vedic mantras by the baby in her womb then looking at the father-in-law told "do not commit suicide (at the extinction of your family line), your grandson is in my womb." Listening to that and considering that the son and the grandson were equally beneficial (in spiritual matters) refrained from putting an end to his life. Parāśara, the son of Śaktri was born from her womb and by him the duties of a son were done and for that his paternal grand father (ie. Vaśiṣṭha) gave him the name Parāśara meaning thereby the person from whom *(yasmāt)* almost dying Vaśiṣṭha *(parasya mṛta-kalpasya Vaśiṣṭhasya)* was saved from violence i.e.

---

27. मुद्रित्रे कालिकापुराणो P. 9.6
अपुत्रस्य गतिर्नास्ति निश्चितं चेति सत्तमाः।
स्वपुत्रैर्भ्रातृपुत्रैर्वा पुत्रवन्तो हि स्वर्गताः।।

death *(maraṇa nivṛtti-rūpam ahiṃsanam)* is Parāśara. The word is derived from the root *śṛ* in the sense of committing violence. In this way the utterances like 'a sonless man has no place to go' are to be understood. Since the *Kālikāpurāṇa* has "A sonless man has no place to go – this is the injunction of Dharma and a man by (service rendered by) natural sons or by nephew have gone to heaven –

(11a) বৈষ্ণবে (বিষ্ণুপুরাণে ?) দেখা গিয়াছে যে ব্রহ্মশাপে রাক্ষসে পরিণত রাজা সৌদাস যখন বশিষ্ঠের শতপুত্রকে ভক্ষণ করিয়াছেন তখন পুত্রশোকে বশিষ্ঠ আত্মঘাতী হইবার উপক্রম করিলে তাঁহার পুত্র শক্তির স্ত্রী, তাঁহার পুত্রবধূ যিনি ছায়ার মত তাঁহাকে অনুসরণ করিতেছিলেন, তাঁহার গর্ভস্থ পুত্রের দ্বারা উচ্চারিত বেদধ্বনি শুনিয়া পরে শ্বশুরকে দেখিয়া বলিলেন—"মরণের পথে যাইবেন না, আপনার পৌত্র আমার গর্ভে আছে"। ইহা শুনিয়া পুত্র ও পৌত্র পিণ্ডদানাদির ব্যাপারে তুল্যোপকারক বিচার করিয়া আত্মহত্যা হইতে বশিষ্ঠ বিরত হইলেন ও পুত্রবধূর গর্ভ হইতে পরাশর নামক শক্তিপুত্র জন্মাইল এবং তাহার দ্বারাই পুত্রের করণীয় সমূহ সাধিত হইল। এবং সেইজন্যই পিতামহ (=বশিষ্ঠ) শিশুর পরাশর এই নামকরণ করিলেন। (যাহার অর্থ) পরস্য অর্থাৎ পরের বা মৃতকল্প বশিষ্ঠের অশরঃ বা মরণনিবৃত্তিরূপ অহিংসা যাহা হইতে (পরস্য অশরো যস্মাৎ স পরাশরঃ—বহুব্রীহি সমাস)। হিংসার্থক শৃ ধাতু হইতে শরঃ। অতএব অপুত্রের (মরণের পর) গতি নাই ইত্যাদি শ্লোকেরও এইরূপ অর্থ বুঝিতে হইবে। কিন্তু ইহার জন্য কালিকাপুরাণের (নিম্নোক্ত বচন)—অপুত্রের গতি নাই, ইহাই ধর্মের বিধান। ঔরসপুত্রের দ্বারা অথবা ভ্রাতুষ্পুত্রের দ্বারা (পারলৌকিক কর্মসাধিত হওয়ায়) লোকে পুত্রবান্ হইয়া স্বর্গগমন করিয়া থাকে—এবং

## 20. মূলম্

**(11B) পুত্রঃ পৌত্রঃ প্রপৌত্রোবা তদ্বদ্বা ভ্রাতৃসন্ততিরিত্যাদি বচনেষু ঔরসেন ভ্রাতৃপুত্রস্য তুল্যত্বাভিধানাত্। সতি ভ্রাতৃপুত্রে দত্তকাদিকং ন করণীয়মিতি বাচ্যম্। স্বতন্ত্রেঽস্য নিয়ন্তুমশক্যত্বাত্। অত্রেদং বীজং প্রপৌত্রপর্যন্তরহিতোপরতস্য ধনে পত্নীদুহিত্রাদিসত্ত্বে ভ্রাতৃপুত্রসত্ত্বে তদ্ধনে পত্ন্যাদীনামেবাধিকারো ন তু ভ্রাতৃপুত্রস্যেতি। তেন চ পিণ্ডদানাদিমূলক পুত্রাধিকারেণ মহদ্বৈষম্যং স্যাত্। যত্র তু ভ্রাতৃপুত্র এবাস্তি ন তু পত্ন্যাদিভ্রাতৃপর্যন্তং তত্রৈব দত্তকো ন করণীয়মিতি**

**सिद्धान्तितम्। दत्तकस्य सपिण्ड सकुल्य समानोदकसगोत्रस्य श्रेयस्त्वे तत्रापि भ्रातृपुत्रसत्वे स एव। भिन्नगोत्रेषु च दौहित्र-भागिनेय-पितृबन्धु-मातृबन्धु[28]-स्वबन्धुसन्तानाः श्रेयांसः। तदप्राप्तौ सर्वत्रापि पातित्यादिदोषहीनो ग्राह्य इति पिण्डाशौच--**

**दीप्तिः**

(11b) कालिकापुराणवचनेन पुत्रपौत्रप्रपौत्रैः भ्रातृपुत्राणां साम्यम् उक्तम्। तेन सति भ्रातृपुत्रे दत्तकं न करणीयम् इति चेत् न। स्वतन्त्रे अस्य नियन्तमशक्यत्वात्। अर्थात् पुत्रविषये यथा तथा भ्रातृपुत्रविषये नियमो न विधेयः। यदि भ्रातृपुत्रः पार्वणं कुर्वीत तदा स्वपितुः स्वपितामहादीनामेव श्राद्धं करोति न तु मृतपितृव्यस्य पितुः पितामहस्य धनाधिकारविषये यथा भ्रातृपुत्रस्य दूरे अवस्थानं पिण्डदानेऽपि तद्वत्। तस्य प्रेतश्राद्धपर्य्यन्तकार्येषु अधिकारः न तु पार्वणादौ। अत्र कारणं तु पत्नीदुहित्रादिसत्त्वे भ्रातृपुत्रसत्त्वे च प्रेतधने पत्न्यादीनामेवाधिकारो न तु भ्रातृपुत्रस्य। अतो योग्यस्थले दत्तको ग्राह्यः। स च सपिण्ड-सकुल्य-समानोदकसगोत्रेभ्यः एव ग्राह्यः। भ्रातृपुत्रे च सपिण्डता-सकुल्यता-समानोदकता-सगोत्रता सर्वा एव सन्ति। भिन्नगोत्रेषु दौहित्र-भागिनेय-पितृबन्धु-मातृबन्धु-आत्मबन्धु-सन्तानानाम् एव ग्राह्यता। तदभावे पातित्यादि दोषहीनो ग्राह्यः। दत्तकचन्द्रिकायां दौहित्र भागिनेयानां दत्तक रूपेण ग्रहणं निषिद्धम्। तन्मते दौहित्रभागिनेयानां दत्तककरणे शूद्राः प्रभवेयुःन ब्राह्मणादयः। दत्तक-मीमांसायामपि ममूक्तौ (9.182) भ्रातृणामिति पुंस्त्व निर्देशात् पदद्वयोपादानसामर्थ्याच्च सोदराणां भ्रातृभगिनीनामपि परस्परं पुत्रग्रहीतृत्वाभावोऽवगम्यते। तदाह बृद्धगौतमः --ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्।

---

28. *pitṛbandhu, mātṛbandhu* and *ātmabandhu* are technical terms in Smṛti meaning kinsman by the father's side, kinsman by the mother's side and one's first cousin. They are thus defined: पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः, पितुर्मातुल पुत्राश्च विज्ञेयाः पितृबान्धवाः मातुः पितुः स्वसुः पुत्राः मातुर्मातुः स्वसुः सुताः। मातुर्मातुसपुत्राश्च विज्ञेयामातृबान्धवाः॥
आत्ममातुः स्वसुः पुत्राः आत्मपितुः स्वसुः सुताः। आत्ममातुल पुत्राश्च विज्ञेया आत्म वान्धवाः॥ शब्दकल्पद्रुम। शूलपाणि सम्बन्ध विवेचक (Ed. J.B. Choudhury, p. 8, names मातृवन्धू, पितृवन्धु।

(11b) and also "son, grandson and great grandson or like them the son of the brother" in such sayings—equality of an *aurasa* son having been accepted, one need not say that a *dattaka* son should not be accepted when a nephew - brother's son exists. For in such separate case no restriction can be made. Herein lives the crux (seed). The wealth of a man dying without a male posterity upto the level of great grandson goes to his wife etc. when successors like wife, daughter, brother's son etc. survive and not to his brother's son. Getting the works like offering the *piṇḍa* (receiving the heritage) etc. which are the (exclusive) right/ duty of the son, done (by the nephew) will create great disparity. Where, however, the brother's son exists and not wife (daughter etc.)..... upto the brother, in such cases only, it has been decided that no *dattaka* son is to be adopted.

In the matter of adoption although *sapiṇḍa* relation, *sakalya* (belonging to the same family but distinct from *sapiṇḍa*), *samānodaka* and *sagotra* get preference even then in the presence of a brother's son it is he who gets preference.

And among the (prospective *dattakas*) separate *gotras* daughter's son, sister's son male of spring of[28] *pitṛbandhu*, *mātṛbandu*and *ātmabandhu*are preferable. In all cases, one without a defect like apostasy (loss of caste etc.)—is to be adopted.

(11b) "পুত্র, পৌত্র, প্রপ্রৌত্র বা তাহাদের মত ভ্রাতুষ্পুত্র—" ইত্যাদি বচনে ঔরসপুত্র ও ভ্রাতৃপুত্রের তুল্যত্ব বিধান করায়—ভ্রাতুষ্পুত্র থাকিলে দত্তক গ্রহণ উচিত নয় এইরূপ বলা যায় না। কারণ পুত্রের ক্ষেত্রে একপ্রকার, ভ্রাতৃপুত্রের ক্ষেত্রে অন্যপ্রকার এই স্বতন্ত্রনিয়ম করা যায় না। এখানে আলোচনার ইহাই বীজ — প্রপৌত্রপর্যন্ত পুত্রসন্তানরহিত ব্যক্তির পত্নী ও কন্যা থাকিলে এবং ভ্রাতৃপুত্র থাকিলে(ও) তাহার ধনে পত্নী ও কন্যাদেরই অধিকার, ভ্রাতৃপুত্রের নয়। সেই ভ্রাতৃপুত্রের দ্বারা পুত্রের করণীয় পিণ্ডদানাদি কার্য করিলে মহা বৈষম্য উপস্থিত হইবে। যেখানে পত্নী-কন্যা-ভ্রাতা পর্যন্ত কেহই নাই কিন্তু ভ্রাতুষ্পুত্র আছে সেক্ষেত্রে দত্তক গ্রহণ করা উচিত নয় ইহাই সিদ্ধান্তিত হইয়াছে।।

দত্তক হইবার যোগ্যতা ব্যাপারে সপিণ্ড-সকুল্য-সমানোদক সগোত্রই অধিক বাঞ্ছনীয়। সে স্থলেও যদি ভ্রাতুষ্পুত্র থাকে তবে সেই দত্তক হইবার যোগ্য [কারণ ভ্রাতুষ্পুত্র একাধারে সপিণ্ড- সকুল্য-সমানোদক সগোত্র] ভিন্ন গোত্রের মধ্যে দৌহিত্র-ভাগিনেয় পিতৃবন্ধু-মাতৃবন্ধু-আত্মবন্ধুদের সন্তানই দত্তক হইবার যোগ্য। [ইহা দত্তকমীমাংসা দত্তকচন্দ্রিকার মতের বিরোধী। কারণ তাহাদের মতে যাহার মাতাতে নিয়োগ সম্ভব এমন স্ত্রীর পুত্রকেই দত্তক নেওয়া যায়]।

## 21. मूलम्

**(12A) (पिण्डाशौच) सम्बन्धेन सम्बन्धस्याभ्यर्हितत्वादिति दिक्। ननु दत्तकश्च स्वयं दत्तः कृत्तिमः क्रीत एव च। अपविद्धाश्च ये पुत्रा भरणीयाः सदैव ते।। भिन्नगोत्राः पृथकपिण्डाः पृथग्वंशकराः स्मृताः। जनने मरणे चैव त्र्यहाशौचस्य भागिनः---इति ब्रह्मपुराणादिवचने भिन्नगोत्रा इति विशेषणात् स्वगोत्र दत्तककरणे गोत्रभेदः कथं संगच्छते इति चेत भिन्नगोत्रादिपदानां विधेयत्वेन नायं दोषः। तथाचैते भिन्नगोत्रा भवन्ति एवं पृथक् पिण्डादयो बोद्धव्याः। भेदप्रतीतिस्तु पुरुषपरम्पराप्रसिद्धमादिपुरुष-ब्राह्मणात्मकं गोत्रपदाभिधेयं सगोत्रे तद्भेदस्तु जनकतानिबन्धनौतसर्गिकगोत्रात् पृथक् भूतानां जनकस्य गोत्रोल्लेख्यार्ह कर्म्मणे ग्रहीत्रनुयोगिकमेव गोत्रमुल्लेख्य--**

**दीप्तिः**

(12a) भवदेवीये पिण्डाशौचसम्बन्धस्य आदरणीयतया नेदीयस्तया च एतादृशः निर्देशः कृतः। ब्रह्मपुराणवचनेन दत्तक-स्वयंदत्त-कृत्रिम-क्रीतापाविद्धरूप पुत्रपञ्चकस्य भिन्नगोत्रत्वं कथितम्। किन्तु नैतत् स्वगोत्रात् दत्तको न ग्राह्यः इति निषेधपरम्। भिन्न गोत्रादपि सति प्रसंगे दत्तको ग्रहीतुं शक्यते-इति आशयः। अतो न दोषः। दौहित्र भागिनेयास्तु भिन्नगोत्राः पृथकपिण्डाश्च। पिता, पितामहः, प्रपितामहश्च पिण्डभाजः बृद्धप्रपितामह-अतिबृद्धप्रपितामह-अत्यति-बृद्धप्रपितामहाश्च लेपभाजः इति षट्, पिण्डदाता च सप्तमः। समवायेन सापिण्डयं साप्तपौरुषम्, पृथकपिण्डेषु भागिनेयादयः सदा पार्वण श्राद्धं विदधते तदा मातामह-प्रमातामह-बृद्धप्रमातामहानामेव श्राद्धं विदधते न तु मातुलस्य। भातृपुत्रोऽपि तत् पितुः, पितामहस्य प्रपितामहस्य एव पिण्डं निर्वपति न तु पितृव्यस्य।

गोत्रं नाम आदिपुरूषः जमदग्निभरद्वाजप्रभृतिः। तेषां सन्ततिः तद्गोत्रभाक्। दत्तकग्रहणकाले दाता स्वगोत्रस्य-ग्रहीतृगोत्रस्य अर्थात् औत्सर्गिक गोत्रस्य उल्लेखपुरः सरं दद्यात्। यथा काश्यपगोत्रोऽहम् अमुकदेवशर्मा वातस्यगोत्राय अमुकदेवशर्मणे सम्प्रददामि इति। दत्तकविधौ-अनन्तरं ग्रहीतुर्गोत्रस्य उल्लेखेन क्रिया विधीयते।

(12a) Because the relation contingent upon *piṇḍa* and *aśauca* is more desirable. Dattaka, Svayamdatta, Kṛtrima, Krīta and Apaviddha—these five types of (secondary) sons are always to be maintained by subsistence, (although) belonging to separate gotras, offering separate *piṇḍas* and creating separate families—they observe impurity for three days in cases of birth & death (in the family of the adoptive father)—in this quotation from the *Brahmapurāṇa* there is an adjective *bhinnagotrā* (belonging to a different *gotra*) and how far that is justifiable—in the case of adopting a child from one's own *gotra*, how can there be a change of *gotra* ?

The answer is that since the expressions *bhinnagotra* etc. (in the above quotation from the *Brahmapurāṇa*) are predicatively used—there is no defect here. Thus, they (usually) belong to separate *gotras* and they offer seperate *piṇḍa*—this is to be understood.

In the matter of change of *gotra*—*gotra* is the name of the progenitor brahmin who as per tradition, established a particular family. When adoption is made from the same *gotra* that remains. When a change takes place—there the name of the *gotra* of the father is mentioned—in actions (as adoptions) requiring it and the name of the adopter is mentioned (and hence a change takes place).

(12a) কারণ পিণ্ডভাগিত্ব ও অশৌচভাগিত্বরূপ যে সম্বন্ধ তাহাই অধিকতর কাম্য। আচ্ছা, ব্রহ্ম পুরাণের বচনটিতে—"দত্তক, স্বয়ংদত্ত, কৃত্রিম, ক্রীত ও অপবিদ্ধ নামক পুত্রগণ সর্বদা ভরণ পোষণ যোগ্য— (তাহারা) ভিন্নগোত্রের, পৃথক্ পিণ্ডের ও পৃথক্ বংশের কারক, তাহারা জনন ও মরণজনিত অশৌচে তিনদিন অশৌচ পালন করে—"। ভিন্নগোত্র এই বিশেষণের দ্বারা গ্রহীতার সমান গোত্রের একজনকে দত্তক করিলে (দত্তকের) গোত্রভেদ হয় একথা কতদূর সঙ্গত?—এইরূপ বলিলে উত্তর এই যে 'না, দোষ হয় না, কারণ উক্ত বচনে ভিন্নগোত্র প্রভৃতি পদগুলি বিধেয়

(করণীয়) রূপে ব্যবহৃত—অর্থাৎ স্বগোত্র হইতে দত্তক করিবে না এইরূপ অর্থ হয় না। ইহার অর্থ সম্ভাব্যক্ষেত্রে ভিন্ন গোত্র হইতেও দত্তক নেওয়া যায়। তাই ইহারা ভিন্ন গোত্র ও পৃথক্‌পিণ্ডও হয় ইহা বুঝিতে হইবে। [দৌহিত্র ও ভাগিনেয় ভিন্নগোত্র ও পৃথক্‌পিণ্ড। ভাগিনেয় যখন পিণ্ড দেয় তখন মাতামহ, প্রমাতামহ ও বৃদ্ধ প্রমাতামহকে পিণ্ড দেয়, বি স্তু মাতুলকে নয়। আবার ভ্রাতুষ্পুত্র যখন পিণ্ড দেয় তখন পিতা, পিতামহ, প্রপিতামহের পিণ্ড দেয়, পিতৃব্যের পিণ্ড দেয় না]।

দত্তক গ্রহণে—পুরুষপরম্পরায় বংশের আদিপুরুষ যে ব্রাহ্মণ তাঁহার নামানুযায়ীই গোত্রের নাম হয়। নিজ গোত্র হইতে দত্তক গ্রহণে তাহাই থাকে। গোত্রভেদে পিতৃত্বজনিত নির্দিষ্ট গোত্র হইতে ভিন্ন হইলে জাতকের জনকের গোত্রের উল্লেখপূর্বক যে দত্তকক্রিয়া হয় তাহাতে গ্রহীতার নাম উল্লেখ পূর্বকই হয়।

## 22. मूलम्

**(12B) अतएव पृथकपिण्डाः पृथग्वंशकराश्च भवन्तीति शेषः। अतएव गोत्ररिकृथे जनयितुर्नहरेद्दत्रिमः सुतः।[28a] गोत्ररिकृथानुगः पिण्डोव्यपैति ददतः स्वधा।। इति कालिकापुराणीयमाहात्म्यं तन्न्यायमूलम्। पृथक् पिण्डा इति दातृत्वभोक्तृत्वान्यतरसम्बन्धेन पिण्डसम्बन्धात् पृथकृभूताः। एवं जनकवंशेतरवंश-प्रवर्त्तका भवन्तीति हेतोर्जनयितुर्गोत्र रिकृथौ दानान्निष्पन्नः सुतो न हरेत् न प्राप्नुयादिति। अत्र च पुनः पृथक् पदोपादानमत्यन्त-विच्छेदसूचनार्थम्। अत्रापि वीजं दर्शयति-गोत्ररिकृथानुगेति। पित्रा हि गोत्रसम्बन्धेन धनसम्बन्धेन वानुगमो भवति। तच्च जनके नास्ति यातः (यतः) पुत्रं ददतो जनकस्य दत्तात् आत्मजात् स्वधा निवर्त्तते तथा पुत्रसम्बन्धोऽपीति। जनने मरणे इत्यत्र सूतके मृतके इति पाठस्तत्रार्थः**

**दीप्तिः**

(12b) ततश्च तथाविधेन पुत्रेण जनयितुः श्राद्धादिकं न कार्य्यम्, न वा तस्माद्धनाहरणम्। जनकवंशेतरवंशप्रवर्त्तकास्ते भवन्ति। दातुश्च जनकस्य आत्मजात् गोत्रसम्बन्धो धनसम्बन्धो निवर्त्तते, पुत्रसम्बन्धोऽपि। कालिकापुराणीयमाहात्म्यं पुनरस्माभिर्नलब्धम्। वचनश्चेदं "गोत्ररिकृथे.......स्वधा" मनुसंहितायां (g.142) वर्त्तते।

---

28a. मुद्रिते मनुसंहितायंथे (9.142) सूतः स्थाले क्वचित् इति पाठोऽपि दृश्यते।

(12b) Hence the complete sentence means : 'those offering *piṇḍas* separately create separate families'. The saying of the *Kalikapurana-mahatmya* : "The *gotra* and the wealth of the father who gives away his son in adoption do not pass on to that adopted son and receiving of *piṇḍa* which is dependent upon passing on of the *gotra* and wealth cases to (be received by) the giver of sons in adoption"—is also therefore based on the same principle. Svadhā means the *piṇḍas* etc. offered to the manes.

Pṛthakpiṇḍa means separated from *piṇḍa*-caused-relationship related either as a receiver or as a giver. So, for the reason that they create a family other than the one to which the father belonged, the sons given in adoption do not receive the *gotra* and wealth of their (natural) fathers.

Here again, the use of the word *pṛthak* is intended to signify total separation (of the father and his natural son given in adoption). Here also the main point is shown by the expression : '*gotra-rikthanugaḥ*'—affinity with the procrator rests on getting either his gotra or his wealth. That has ceased in the father because after giving away the son the father ceases, to get *piṇḍa* from and to give wealth to the son and there is ceseation of father and son relationship also.

There is a variant reading : '*sūtake mṛtake ca*' in the place of '*janane maraṇe*—'; there the meaning is:

(12b) তাই পৃথক্ পিণ্ডদাতা পৃথগ্ বংশকর হয় এইভাবে বাক্যশেষ হয়। জনকের গোত্র ও ধনসম্পদ দত্তকপুত্র পাইবে না। গোত্রলাভ ও ধনলাভকারক যে পিণ্ডদান তাহা পুত্রদানকারী হইতে অপগত হয়। (অর্থাৎ তাদৃশ পুত্রের পিণ্ড তাহার জনক পিতা পায় না) ইত্যাদি কালিকা পুরাণ মাহাত্ম্যের বচনও এই ন্যায়মূলক। স্বধা শব্দের অর্থ মৃত পিতৃগণের উদ্দেশে প্রযুক্ত (শ্রাদ্ধাদি)।

পৃথক্‌পিণ্ডঃ ইহার অর্থ পিণ্ডদাতা ও পিণ্ডভোক্তা ইহাদের যেকোনও একটির সম্বন্ধের দ্বারা পিণ্ডদান বা গ্রহণ হইতে বিচ্ছিন্ন।

এইরূপে জনকের বংশ হইতে অন্যবংশের প্রবর্ত্তক হয় (যে গোত্র প্রবর্ত্তক ঋষি তজ্জ ন্য) গোত্রান্তর হয়। এইরূপে জনয়িতার রিক্‌থ ও গোত্র দাননিষ্পন্ন যা অন্যের দ্বারা দত্তকরূপে গৃহীত পুত্র পায় না। এই পূর্বোক্তবচনে পৃথক্ এই পদটি গ্রহণের দ্বারা দাতা (পিতা) ও দত্ত পুত্রের মধ্যে সম্পূর্ণ বিচ্ছেদ বুঝা যায়। সেখানেও বীজ

প্রদর্শন করা হইতেছে—গোত্ররিক্থানুগ শব্দের দ্বারা। পিতার সহিত ধনসম্বন্ধে বা গোত্র সম্বন্ধে পুত্রের সম্বন্ধ—তাহা জনক পিতাতে আর নাই কারণ পুত্রকে দান করিয়া জনকপিতার দত্ত আত্মজ হইতে স্বধা বা পিণ্ডপ্রাপ্তি নিবারিত হয় এবং পুত্রদের ধনপ্রাপ্তি ও নিবারিত হয়। "জননে মরণে" (পূর্বে উল্লিখিত—জননে মরণে চৈব ত্র্যহাশৌচস্য ভাগিনঃ-শ্লোকে) ইহার স্থলে (কোথাও কোথাও) 'সূতকে মৃতকে' এইরূপ পাঠ পাওয়া যায়, তাহার অর্থ—

## 23. मूलम्

**(13A) जनने ज्ञाति जनने, मरणे ज्ञातिमरणे (सूतके ज्ञातिजनने, मृतके ज्ञातिमरणे) दत्तकस्य दत्तकमरणे पित्रादिसपिण्डानां त्रिरात्रम्। अत्र यद्यपि पितापुत्रपदयोः सम्बन्धिमात्रबोधकत्वात् ज्ञातीनां तन्मरणादि प्रयोज्याशौचसम्वन्धो न भवितुमर्हतीति प्रतीयते तथापि वक्ष्यमाणमन्वादिवचनेषु वन्धुपदगोत्रभाज(क्?) त्वादिपदोपादानात्तेषाम् अप्यशौचसम्बन्धोऽस्तीति भाव्यम्। तच्च सगोत्रदत्तकेऽपि वचनवलात् मातापित्रोस्त्रिरात्रं, तदस्य सपिण्डेषु तदधिकाशौचकल्पने मूलभूतश्रुत्यन्तरकल्पनया विधिद्वैरूप्य सिद्धेस्तेषामपि त्रिरात्रमेव। यथा त्रिरात्रानुवृत्तौ विष्णुः (xxii, 42-43) अनौरसेषु[29] पुत्रेषु स्वभार्य्यास्वन्यगासुचेति। तथा परपूर्व्वासु भार्य्यासु पुत्रेषु कृतकेषु। त्रिरात्रं स्यात्तथाचार्य्यस्वभार्य्यास्वन्यगासु चेत्यादिवचनात्। अत्र परपूर्वासु भार्य्यासु अनौरसेषु पुत्रेषु च यत् प्रतियोगिकभार्य्यात्वं पुत्रत्वञ्च**

### दीप्तिः

(13a) तस्यामवस्थायामेको विषमशिष्टदोष आयाति। यथा दत्तकपुत्रस्य मरणे ग्रहीतुः तत्पत्न्याश्च त्रिरात्रमशौचम्। ग्रहीतुः तत्पत्न्याश्च मरणे दत्तकस्य त्रिरात्रमशौचम्। किन्तु दत्तकजातस्य पुत्रस्य मरणे ग्रहीतुस्तत्पत्न्याश्च दशरात्रमशौचम्। दत्तकग्रहीतुः तत्पत्न्याश्चमरणे तत्सपिण्डानां पुनः पूर्णाशौचव्यवस्था। दत्तकगृहीतो यः पुत्रः तस्य

---

29. आचार्ये मातामहे च व्यतीते त्रिरात्रेण—। अनौरसेषु पुत्रेषु जातेषु च मृतेषु च। परपूर्वासु भार्यासु प्रशूतासु मृतासु च॥ विष्णु धर्मसूत्रम् ॥xxii, 42-43. अग्रेऽपि fol 32bपृष्ठायां सूत्रद्वयमुद्धृतम्। तेन च प्रक्षिप्तोऽयमंसोऽत्र निबन्धे इति सन्देहोऽपि आपतति—इति दोषज्ञाः केचित्॥

पुत्रस्य मरणे सर्वेषामेव पूर्णाशौचम्। औरसव्यतिरिक्तानां पुत्रानां क्षेत्रे इयमेव व्यवस्था। यतो दत्तकेन सह ग्रहीतुः त्रिरात्राशौचव्यवस्था, अतो ग्रहीतुः ज्ञातीनां मरणेऽपि दत्तकस्य त्रिरात्रमशौचम्। विष्णुवचनम्-अत्रमुद्रित विष्णु सूत्र (Madras Edn. 1964 ग्रंथस्थ xxii, 42-43) सूत्रद्वयस्य रूपान्तररूपेण निबन्धकारः प्रदत्तवान् अनौरसेषु पुत्रेषु इत्यादिकम्। परपूर्वासु अर्थात् नियोगप्राप्तासु भार्यासु। नियोगजस्तु स्वमातुः पत्युः क्षेत्रजपुत्रः। यत् प्रतियोगिकं भार्यात्वम्–इति। यः प्रतियोगीसम्बन्धी यस्य भार्यात्वस्य पुत्रत्वस्य सम्बन्धः तस्यैव। अत्रायमभिसन्धिः–

(13a) *janane* i.e. in the event of the birth of cognate kinsmen and *maraṇe* i.e. in the death of such kinsmen (impurity of the) adopted son and in the case of death of the adopted son (impurity of the) adoptive father (and mother also) and his kinsmen will be for three days. Here (in the statement) although the expression father and son mean only words indicating relationship (of father and son only) the impurity caused by death etc. of such person should not extend to the kinsmen—this sense is apparent even then in the forthcoming statements of Manu and others,—the use of word like *bandhu* (kinsmen), *gotrabhāg* (belonging to the same *gotra*) indicate that such relations also have connections where impurity can be attached (in such contingencies).

That, as per statements made, applies to the adopted son taken from the same gotra, to the parents (adoptive) impurity for three nights, the same applies to their *sapiṇḍas*. If impurity for more days is to be presumed, a supporting separate Vedic authority is to be imagined and in that although the twofold nature of the injunction authority is obtained—even then impurity for three nights is agreed upon. For example, in the context of (impurity for) three nights *Viṣṇu-dharma-sūtra* (=*Viṣṇusmṛti*) has : in the case of death of sons other than the natural one, of wives gone to others, *parapūrvā* wives (who have been allowed to join in levirate) and of adopted sons impurity is for three nights and also the same in the case of preceptors and own wives from different castes.

In this statement—*parapūrvā bhāryā*, an *aurasa putra*—means the person on whom the relation stands—i.e. the husband, (the adoptive) father—and therefore impurity attaches to him and to none else.

(13a) জননে অর্থাৎ জ্ঞাতির জন্মে, মরণে অর্থাৎ জ্ঞাতির মরণে দত্তকের ত্রিরাত্র অশৌচ এবং দত্তকের মৃত্যু হইলে গ্রহীতা পিতার ও তাহার সপিণ্ডদের ত্রিরাত্র অশৌচ। এস্থলে যদিও পিতা ও পুত্র এই দুইটি পদ পিতার পুত্র, পুত্রের পিতা এইরূপ সম্বন্ধবান্ বলিয়া জ্ঞাতিদের দত্তকমরণজনিত অশৌচপাত হওয়া উচিত নয় এইরূপ মনে হইতে পারে তথাপি বক্ষ্যমাণ মনু প্রভৃতির বচনে বন্ধু, গোত্রভাক্ ইত্যাদি পদ গ্রহণ করা হইয়াছে বলিয়া তাহাদেরও (=সপিণ্ডদেরও) অশৌচ সম্বন্ধ আছে ইহা বুঝিতে হইবে। এবং সেই (অশৌচসম্বন্ধ) স্বগোত্র দত্তকেও (আছে এই) বচন বলে মাতা ও পিতার ত্রিরাত্র, তাহাদের সপিণ্ডেও তাহাই। তাহার অধিক অশৌচকল্পনা করিতে হইলে সঠিক আর একটি মূলস্বরূপ শ্রুতিকল্পনার দ্বারা বিধির দ্বৈরূপ্য সিদ্ধ হইলেও তাহাদেরও ত্রিরাত্রই।

যথা—ত্রিরাত্র অশৌচ-এর অনুবৃত্তিতে বিষ্ণুস্মৃতি (XXII, 42-43) অনৌরস পুত্র, অন্যগামিনী নিজভার্যা, পরপূর্বা ভার্যা ও কৃচকপুত্র—ইহাদের ত্রিরাত্র অশৌচ—তাহাই আচার্য, অন্যজা ভার্যা ও স্বভার্যার মরণে। এখানে পরপূর্বা (বা নিয়োগ প্রাপ্তা) ভার্যাতে, অনৌরস পুত্রতে—ইত্যাদি বচনে যাহার সম্বন্ধে ভার্যা, যাহার সম্বন্ধে পুত্র তাহারই অশৌচ—

## 24. मूलम्

**(13B) तस्यैव त्र्यहाशौचं नान्येषामिति[30]। एतेन भिन्नगोत्रा इत्युद्दिश्य विशेषणं प्रकल्प्य तत्र त्रिरात्रं सगोत्रे सम्पूर्णमशौचमिति निरस्तम्। सूतकेषु चेति चकारात् औरसेतर (परिग्रहः) ननु गोत्रपदस्य ब्राह्मणपरत्वे किं मानम्। सत्त्वेऽपि क्षत्रियादीनां वा कथं गोत्रोल्लेखः सम्भवति, तेन च गोत्रोल्लिखित-श्राद्धतर्पणादावनधिकारापत्तेः। अत्रोच्यते गोत्रपदं ब्राह्मणे शाक्तं (=शक्तं), क्षत्रियादौ त्वातिदेशिकम्। गोत्रप्रवर्त्तकान् मुनीनाह-जमदग्निर्भरद्वाजा विश्वामित्रोऽत्रि गोतमाः। वशिष्ठकाश्यपागस्त्यामुनयो गोत्रकारिणः।। तथा-शाण्डिल्यवात्स्य सावर्ण भरद्वाजश्च मुद्गलः। व्याघ्रपादः शुनःशेफो गर्गाद्या गोत्रकारिणः। एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते इत्यादि ऋष्युक्तिः। शण्डिल्यो गोत्रं यस्य**

---

30. आदर्शे—"नान्येषामिति रुद्रधरः" इति अधिकः पाठो लब्धः, स च प्रक्षिप्त इति मन्वानैरस्माभिः परित्यक्तः। तत्र टीका द्रष्टव्या।

**दीप्तिः**

(13b) रामेणापुत्रेण स्वपत्नी श्यामेन नियोजिता। रामेणैव तस्याः भार्यात्वसम्बन्धः, न तु श्यामेन-तेन सह केवलम् उत्पादकत्व सम्बन्धस्य सिद्धेः। रामस्य मरणे श्यामस्य वा मरणे अत्र नियोगजातक्षेत्रजस्य त्रिरात्रमशौचम्। उत्पादकेन सह तन्नार्याः भार्यात्व विपरीतसम्बन्धो हि-यत्प्रतियोगिकं भार्यात्वम् इत्यादिना उपन्यस्तम्। तन्नार्याः उत्पादकस्य च मरणे त्र्यहाशौचम्-इति हि कस्यापि स्मार्त्तस्य रुद्रधरस्य मतम् इति केचित्। मैथिलेषु स्मार्त्तेषु द्वौ रूद्रधरौ आस्ताम्। प्राचीनस्य ग्रन्थाः नोपलभ्यन्ते। अर्वाचीन मैथिलरुद्रधरस्य वर्षकृत्य-श्राद्धविवेक शुद्धिविवेकाख्याः ग्रन्थाः लभ्यन्ते। तत्र शुद्धिविवेकग्रन्थे नायमाशय आलोच्यत्वेन गृहीतः। गृहीते सत्यपि भट्टभवदेवात् प्रायः शताब्दीत्रयमितकालेन अर्वाग् जातत्वात् रुद्रधरस्य– तदुल्लेखः भवदेवेन काल विपर्ययदोषमुत्पादयेत् इति मत्वा प्रक्षिप्तोऽयमंशः लिपिकरप्रमादपाठमावहति इति हेतोः तन्नाम परित्यक्तम्। अनेन च स्वगोत्रीयेनोत्पन्नस्य क्षेत्रजपुत्रस्य पूर्णाशौचव्यवस्था निराकृता। प्रसंगोऽयमग्रेऽपि आगमिष्यति इति अत्र एतावत्पर्यन्तमस्तु।

गोत्रं नाम न केवलं ब्राह्मणानामेव, क्षत्रियवैश्ययोरपि, तत्तत्पुरोहितगोत्रभागित्वात्। गोत्रप्रवर्त्तकमुनेर्व्यावर्त्तको मुनिगण एव प्रवरपादभाक्। क्षत्रियवैश्ययोर्गोत्रमतिदेशेन लभ्यते, ब्राह्मणानां तुपदिष्टम्। अतः क्षत्रियवैश्ययोः उपदिष्टातिदिष्टता गोत्रस्य। शूद्राणां पुनः अतिदिष्टातिदिष्टगोत्रता। अतस्तेषां स्वगोत्रविवाहे न दोषः।

(13b) for such persons only impurity lasts for three days and not for others. By this the expression '*bhinnagotrāḥ*' as *adjective of the subject*, 'impurity in that case lasts for three days' and the vices that "for a son born of levirate full impurity is to be observed" is thus refuted. By the conjunction particle '*ca*' in '*sūtakeṣu ca*' we are to understand the sons other than the *aurasa* (i.e. the secondary sons). Now, (a question is) why the word '*gotra*' should invariably mean a brahmin? What is the sanction behind it ? and if that is so, how the *gotra* of Kṣatriya or Vaiśya should be determined and if such people have no *gotra*) they are debarred from performing Śrāddha, *tarpaṇa* etc. where *gotra* is to be mentioned. Here it is said—The word *gotra* is primarily expressive of a brahmin and in the cases of Kṣatriya etc. it is used in extended sense *(atideśa)*. The sages who started *gotra* are : Jamadagni, Bharadvāja, Viśvāmitra, Atri, Gotama, Vaśiṣṭha, Kāśyapa, Agastya, Śāṇḍilya, Vātsya, Sāvarṇa, Mudgala, Vyāghrapāda,

Śunaḥ Śepha, Garga and others. The descendants of these are known as belonging to these respective gotras. This is the saying of sages. Śāṇḍilya gotra (means one born in the lineage of Śāṇḍilya)–

(13b) তাহাদেরই তিনদিনের অশৌচ, অন্যদের নয়। ইহার দ্বারা 'ভিন্ন গোত্রাঃ' ইহাকে উদ্দেশ্য বিশেষণ কল্পনা করিয়া সেক্ষেত্রে ত্রিরাত্র অশৌচ (বিহিত হইল এবং) সগোত্রের (দ্বারা উৎপন্ন ক্ষেত্রজাদি পুত্রের) পূর্ণাশৌচব্যবস্থা নিরস্ত হইল। সূচকেষু চ' এই বচনে স্থিত চ-কার দ্বারা ঔরস ভিন্নপুত্রদের গ্রহণ।

আস্থা-গোত্রপদটির দ্বারা কেবলমাত্র ব্রাহ্মণকে বুঝায় ইহার প্রমাণ কি? তাহাই যদি হয় তবে ক্ষত্রিয় প্রভৃতির গোত্রের উল্লেখ কিভাবে হয় এবং (ক্ষত্রিয়দের গোত্র না থাকিলে) তাহার ফলে শ্রাদ্ধ তর্পণ প্রভৃতি ক্রিয়ায় তাহাদের অধিকার কিভাবে জন্মাইবে? এক্ষেত্রে বলা যায়—গোত্র[31] পদের শক্তি (=অর্থ) ব্রাহ্মণকেই বুঝায়। ক্ষত্রিয় বৈশ্যদের গোত্র অতিদেশ (=অর্থপ্রসারণ) দ্বারা বুঝায়। গোত্র প্রবর্ত্তক মুনিদের নাম— জমদগ্নি, ভরদ্বাজ, বিশ্বামিত্র, অত্রি, গোতম, বশিষ্ঠ, কাশ্যপ ও অগস্ত্য—এই মুনিগণ গোত্রকারী। অনুরূপভাবে শাণ্ডিল্য, বাৎস্য, সাবর্ণ, ভরদ্বাজ, মুদ্‌গল, ব্যাঘ্রপাদ, শুনঃশেফ, গর্গ প্রভৃতি মুনিরাও গোত্রকারী। এই মুনিদের যাহারা অপত্য তাহাদের গোত্র মনে করা হয়। শাণ্ডিল্য গোত্র যাহার সে—

## 25. মূলম্

**(14A) সঃ । অত্র সগোত্রশব্দোऽপি গোত্রবাচীত্যন্যে তত্র প্রমাণং ন বিদ্মঃ, পরঞ্চ–"গোত্রং স্মরন্তি সর্বত্র গোত্রস্যাক্ষয্যকর্ম্মণি। গোত্রস্তু তর্পণে প্রোক্তঃ কর্ত্তা এবং ন মুহ্যতি।"[32] ইতি। "অমুকামুক গোত্রৈতত্ তুভ্যমন্নং স্বধানমঃ" ইতি,**

31. পাণিনি বলেন—অপত্যং পৌত্র প্রভৃতি গোত্রম্ (4.1.162)—অর্থাৎ পৌত্র প্রভৃতি বংশধরের গোত্র সংজ্ঞা হয়। কিন্তু পুত্রের গোত্র সংজ্ঞা হয় না। পুত্রকে অনন্তরাপত্য বলা হয়। পৌত্র প্রভৃতিও পিতামহাদিকে নরক হইতে উদ্ধার করে বলিয়া তাহারা গোত্র সংজ্ঞক। আবার পিতা প্রভৃতি যদি জীবিত থাকেন তবে পৌত্রাদির অপত্যকে যুবা বলা হয়— ('জীবতি তু বংশ্যে যুবা'— 4.1.163) তাহাদের গোত্র সংজ্ঞা হয় না। বলা বাহুল্য যে ধর্মশাস্ত্রের গোত্র শব্দশাস্ত্রের গোত্র হইতে ভিন্ন। তালিকাতে ভরদ্বাজ গোত্রের নাম দুইবার আছে। পৃষ্ঠা ১ 4a হইতে আমরা জানিতে পারি যে একটি ভরদ্বাজগোত্রের তিনটি প্রবর (ভরদ্বাজ, আঙ্গরস, বার্হস্পত্য) আবার আর একটি ভরদ্বাজ গোত্রের পঞ্চপ্রবর।

32. গোত্রং স্বরান্তং সর্বত্র গোত্রস্যাক্ষয্যকর্ম্মণি ।
গোত্রস্তু তর্পণে প্রোক্তঃ কর্ত্তা এবং ন মুহ্যতি ॥ উদ্বাহতত্ত্ব (P. 7) ধৃতং গোভিলবচনম্।

**"समानगोत्रप्रवरां समुद्वाह्योपगम्य च। तस्यामुतपाद्य चाण्डालं ब्राह्मण्यादेव हीयते"॥[33] हत्यादिषु गोत्रमात्राभिधानाच्च। प्रवरश्च(श्च)त्वन्यस्य गोत्रप्रवर्त्तकमुनेर्व्यावर्त्तको मुनिगणः। व्यावर्त्तकत्वञ्च इतरभेदानुमापकत्वं तत्त्वञ्च स्वीयप्रवरत्वव्यापकप्रवरत्वं यथा त्रिप्रवरभरद्वाजात् पञ्चप्रवरभरद्वाजो भिन्नः। प्रवरमाह स्कन्दपुराणे--"एकं वेदं स्वशाखाम्वा समधीयेत यैः सह। धर्म्मान् प्रकाशते धत्ते ते हि तत् प्रवराः स्मृता इति। योहि कुलपतिर्गोत्रकारी"मुनिश्च एकं कृत्स्नं वेदं--**

**दीप्तिः**

(14a) सगोत्रं नाम सजातीय गोत्रं, सदृशगोत्रं न तु एकगोत्रम्। गोत्र सगोत्रयोरेकार्थकत्वे नास्ति विनिगमना। अत्र वहूनि वाक्यानि मूले उद्धृतानि येषु केवलं गोत्रशब्दस्यैव प्रयोगः। यथा गोत्रं स्मरन्ति इत्यादिकं गोभिलवचनरूपेण उद्वाहतत्वे धृतम्। समानगोत्र प्रवराम् इत्यादिकमापस्तम्ववचनं--आचारमाधवे तथा मदनपारिजाते लब्धम् उद्वाहतत्वे च उद्धृतम्। एकगोत्रेष्वपि प्रवरभेदः क्वचिद् वर्त्तते। तद्यथा केषाञ्चिद् घृतकौशिकगोत्रीयानां कुशिक-कौशिक घृतकौशिकप्रवराः। अन्येषां घृतकौशिकानां कौशिक कुशिक बन्धुलाश्च प्रवराः। एवं त्रिप्रवरभरद्वाजात् पञ्चप्रवर भरद्वाजो भिन्नः, अतो गोत्रप्रवरयोः पृथक् निर्देशः। आपस्तम्बवचने सगोत्रासमानप्रवराग्रहणमविवाह्यस्त्री-मात्रोपलक्षणम् इति उद्वाहतत्त्वधृता प्रायश्चित्तविवेकव्यवस्था।

अधुना स्कन्दपुराणात् प्रवरपदार्थमाह-एकं वेदमित्यादि-कुलपतिस्तु-"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः"- इत्यादि प्रसिद्धः।

(14a) Here according to some, the word *sagotra* is synonymous with *gotra*, but we have no evidence in support of that. Rather in the statements "they remember the *gotra* always in works meant for perpetuating the *gotra*, the word *gotra* is used in *tarpaṇa* and the performer does not lapse while doing so", and (you departed manes) having such and

---

33. वचनविदमापस्तम्वीयं स्मार्त्तभट्टाचार्य्येण तादृक्तया स्वीकारात्, स्वकीये उद्वाहतत्त्वे (पृ-४) कालमाधव-मदनपारिजातधृतापस्तम्ववचनस्यास्य उद्धाराद्य।

such *gotras*, this rice-ball is to you and salutation to you and "Marrying a girl of the same gotra and *pravara* and procreating a Caṇḍāla in her loses brahminhood" only the word *gotra* is used.

(*Pravara* is a chief ancestor), *Pravaratva* (or *Pravarahood*) is that group of sages that distinguishes from the sage starting another *gotra*. The differentia *(vyāvartaka)* is that—it pervades or covers one's own *pravara* and it differentiates from others (having different *parvaras*)—i.e. one belonging to the Bharadvāja *gotra* of three *pravaras* is distinguished from one of the same Bharadvājagotra but with five *pravaras*.

In the *Skandapurāṇa pravara* is thus postulated : The persons, with whom one Veda entirely or one's own Vedic branch or recension is studied completely (under a common teacher) and the Vedic *dharma* is preached and practised, belong to the same *pravara* as the man who does it.

(14a) এখানে সগোত্রশব্দটিকে গোত্রের পর্যায় বা সমার্থক শব্দ এমন কেহ্ কেহ্ বলেন। (কিন্তু) সে বিষয়ে আমরা কোনও প্রমাণ পাই না বরং (গোভিলের বচন, যাহা পরবর্ত্তীকালে রঘুনন্দনের উদ্বাহতত্ত্বে উদ্ধৃত অনুযায়ী) "গোত্রের চিরস্থায়িত্বাপাদক কর্মসমূহে গোত্রের উল্লেখ করা হয়, তর্পণে গোত্রের উল্লেখ করা হয়। এইসব কর্মের কর্ত্তা কখনও মোহগ্রস্ত হয় না।" "অমুকামুকগোত্র (পিতৃপুরুষ) আপনার উদ্দেশ্যে এই অন্ন স্বধামন্ত্র সহ্ প্রযুক্ত আপনাকে প্রণাম"। "সমানগোত্রের ও সমানপ্রবরের কন্যাকে বিবাহ্ করিয়া তাহাতে উপগত হইয়া সন্তান উৎপাদন করিলে জাতপুত্র চণ্ডাল হয় ও উৎপাদনকারী ব্রাহ্মণ্য হইতে পতিত হয়"—ইত্যাদি স্থলে কেবলমাত্র গোত্রের উল্লেখ আছে (সগোত্রশব্দের নয়)।

প্রবরশব্দের অর্থ হইল লোকের গোত্রকারী মুনি হইতে ভিন্নতা আপাদক মুনিগণ। ব্যাবর্ত্তকত্ব বা ভেদক হইল অন্যের হইতে পৃথকত্ব প্রকাশক—এবং উহা নিজ প্রবরত্বের ব্যাপক এমন প্রবরত্ব। যেমন ত্রিপ্রবর ভরদ্বাজ হইতে পঞ্চপ্রবর ভরদ্বাজ ভিন্ন (যদিও গোত্র নাম একই)।

স্কন্দপুরাণে প্রবর বিষয়ে বলা হইয়াছে—যাহাদের সহিত একটি বেদ অথবা নিজ বেদ শাখা (সম্পূর্ণভাবে) অধ্যয়ন করিয়া বেদোক্ত ধর্মধারণ করা হয়, প্রকাশ করা হয় তাহারা এক প্রবর। যে কুলপতি ও গোত্রকারী মুনি একটি (অর্থাৎ নিজের) বেদ সম্পূর্ণভাবে অথবা নিজ বেদশাখা—

## 26. मूलम्

**(14B) स्वीयशाखां बाधीत्य यैर्मुनिभिः सह तद्वेदोक्तो धर्म्मान् स्वयमनुष्ठानद्वारा प्रकाश(य)ते तद्वेदार्थानुभवद्वारा वा स्मृत्यादिग्रंथान् धत्ते करेणेति ते मुनयस्तस्य मुनिकुलपतेः प्रवराः परिवाराः तद्वंशीयतुल्य-नामकान्तरव्यावर्त्तका इत्यर्थः। प्रकृते तु क्षत्रियवैश्ययोः पौरोहित्यं राजन्यविशां प्रवृणी[34]तेति गृह्यसंग्रहात् पुरोहित गोत्रेणैव गोत्रभागित्वम्। शूद्रस्य तु वैश्यवच्छौच कल्पश्च द्विजोच्छिष्ठस्य भोजनम्[35] (मनु 5.140) इत्यनेन वैश्यधर्म्मातिदेशात् स्नान-तर्पण-श्राद्धादावनिषिद्धा (द्ध) त्रैवर्णिकाचार विधानात् तत्र कर्म्मसु गोत्रोल्लेख-स्यावश्यकत्वादतिदिष्टातिदिष्ट गोत्रभागित्वं सिद्धयति। एवञ्च सगोत्राविवाहोऽपि शूद्रस्य सम्भवति इति। सगोत्राविवाहनिषेधस्तू-पदिष्टाति--**

**दीप्तिः**

(14b) अतः प्रवराः तत्तद्गोत्राणां मुख्यपुरुषाः गोत्रकारिणाञ्च परिवारभूताः अन्तरंगाः। तद्वारेनैव समाननामयुक्तयोः गोत्रयोः व्यवच्छेदनम्। ब्राह्मणानां गोत्रम् उपदिष्ठम्। क्षत्रियवैश्ययोः उपदिष्ट गोत्रभाक्त्वाभावात् तयोः गोत्रनिरूपणप्रकारमाह आश्वलायन-श्रौतसूत्रादीननुसृत्य-पौरोहित्यं राजन्यविशाम् इत्यादि। मूले गृह्यसंग्रहपदेन श्रौतसूत्रस्यात्र ग्रहणम्। तेन पुरोहितगोत्रस्यैव यजमानक्षत्रियवैश्येषु अतिदेशः। अतस्ते उपदिष्टातिदिष्टगोत्रभाजः। शूद्राणां कार्यमिति कृत्यानां कर्त्तरिवेति कर्त्तरि षष्ठी। यथा शास्त्रव्यवहारिभिः द्विजश्रुषकै शूद्रैः मासि मासि मुण्डनं कार्यम्। वैश्यवच्च मृतसुतकादौ शौचकल्पोऽनुष्ठातव्यः। द्विजोच्छिष्ठञ्च भोजनं भुज्यत इति भोजनं कार्यमिति-कुल्लुकभट्टाः।

(14b) [The Kulapati], from whom a particular *gotra* starts and who is a sage in disposition, studying one Veda

---

34. अत्रद्रष्ठव्यम्--आश्वलायनश्रौतसूत्रम् I.3 (पौरोहित्यं राजन्यविशां प्रवृणीते इत्यादि) मिताक्षरा -- on याइवल्क्य- 1.53. अस्मिन् प्रसंगे उद्वाहतत्त्वसम्पादकेन (उद्वाहतत्त्वम) Cal Sanskrit College Publication 1963) कथितम्-- 'The idea is taken from Sambandha Viveka', --p.8. असमीचीनम् इवाभाति। एतत्सम्बन्धविवेक कर्त्तुः शुलपाणोः अपरस्य सम्बन्धविवेकस्यकर्त्तुः भट्टभवदेवादर्वाक् कालप्रसूतत्वात्।

35. शूद्राणां मासिकं कार्यं वपनं न्यायवर्त्तिनाम्। वैश्यवच्छौच कल्पश्च द्विजोच्छिष्टञ्च भोजनम्॥ मनु 5.140.

completely or studying one's own Vedic recension in the company of other sages and then with them propagates the *dharma* as realised from that Veda by himself practising them and by the realisation of the import of that Veda preparing books on Smṛti etc. based on them places then in hand, his (student) sages become the pravara or parivāra or family members of him (that Kulapati) (and these *pravaras*) differentiate between (*gotras)* having same name.

Contextually, for ascertaining the gotra of the Kṣatriya and the Vaiśya it is said in the Gṛhya—compilation texts—(a brahmin) accepts the priestly assignment under Kṣatriyas & Vaiśyas and therefore the latter's *gotra* (name) is taken from their priest's. In the case of Śūdra, however, "for the Śūdras, the rules of *śauca* are like those of a Vaiśya and they are to subsist on what has been left over after eating by the twice born"—by such statements (of Manu, 5.140) the duties of the Vaiśyas having been extended to the Śūdras, and in matters of *snāna, tarpaṇa, śrāddha* etc. the niceties of procedure of the three upper castes not forbidden having (also) been extended to the Śūdras and since in ritual works mention of *gotra* is necessary, their *gotra* (ie. the *gotra* of the Śūdras) is (technically) *atidiṣṭātidiṣṭa* (i.e. their *gotra* comes by extension or *atideśa* of the *gotra* of the Vaiśya, which itself is extended from the *gotra* of the priest of the latter). Therefore the marriage of a *sagotrā* bride even is allowed for a Śūdra. For marriage within the same *gotra* is forbidden for (Vaiśyas & Kṣatriyas whose) *gotras* which are *upadiṣṭātidiṣṭa*

(14b) যে মুনিগণের সহিত অধ্যয়ন করিয়া সেই বেদোক্তধর্মের স্বয়ং অনুষ্ঠান দ্বারা প্রকাশ করেন অথবা সেই বেদের (বা বেদশাখার) অর্থ অনুভব করিয়া স্মৃতি প্রভৃতি গ্রন্থ হস্তে ধারণ করেন—সেই মুনিগণ তাদৃশ কুলপতি মুনির প্রবর—তাঁহার পরিবারস্থ, একবংশের, একই নামযুক্তদের ভেদক।

ক্ষত্রিয়বৈশ্যদের প্রসঙ্গে ক্ষত্রিয় ও বৈশ্যদের পুরোহিত পদ (ব্রাহ্মণ) স্বীকার কর ইত্যাদি গৃহ্য সংগ্রহগ্রন্থে যাহা বলা হইয়াছে তাহা হইতে—পুরোহিত গোত্র হইতেই ক্ষত্রিয় বৈশ্যদের গোত্রলাভ হয় (কারণ ব্রাহ্মণদের গোত্র উপদিষ্ট—, তাহা অতিদেশ দ্বারা পাওয়া যায় বলিয়া ক্ষত্রিয় বৈশ্যদের গোত্র উপদিষ্টাতিদিষ্ট)। শূদ্রদের ক্ষেত্রে মনূক্ত (5.140)—বৈশ্যদের মত শৌচনির্ধারণ ও দ্বিজোচ্ছিষ্টের ভোজন (নির্দিষ্ট হওয়ায়) বৈশ্যদের ধর্মের অতিদেশ (—শূদ্রদের ক্ষেত্রে প্রসারিত) হওয়ায় স্নান,

তপর্ণ, শ্রাদ্ধাদিতে (শূদ্রের পক্ষে) অনিষিদ্ধ ত্রৈবর্ণিকাচার (বা ব্রাহ্মণ ক্ষত্রিয় বৈশ্যের আচার) বিহিত হইয়াছে বলিয়া, (এবং) অনুষ্ঠেয় তত্তৎ কর্মে গোত্রের উল্লেখ আবশ্যক বিধায়—তাহাদের গোত্র অতিদিষ্টাতিদিষ্ট রূপে সিদ্ধ হয়। তাই শূদ্রদের সগোত্রা বিবাহও সম্ভব। কারণ সগোত্রাবিবাহ্ উপদিষ্ট ও উপদিষ্টাতিদিষ্ট গোত্রভাগীদেরই নিষিদ্ধ।

## 27. मूलम्

**(15A) दिष्टगोत्रस्यैव नत्वतिदिष्टातिदिष्ट गोत्रस्येति वहवः, वस्तुतो वचनाभावान्नैतत् (–न्नैषः) साधीयः क्रमः – इत्यलं प्रपञ्चेन।।**

**अथेदानीं दत्तकपुत्रप्रसंगाद् द्वादशविधाः पुत्रा उच्यन्ते ।। तत्र मनुः-- एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।। (Sl. 9. 163 ab)।। स्वक्षेत्रे[36] संस्कृतायां तु स्वयमुत्पादयेद्धि यम्। तमौरसं विजानीयात् पुत्रं प्राथमकल्पिकम्[37]।। (Sl. 9. 166)।। यस्तल्पजः प्रमीतस्य क्लीवस्य ब्याधितस्य वा। स्वधर्म्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः।। (Sl. 9. 167)माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं सज्ञेयो दत्रिमः सुतः।। (Sl. 9.168)।। सदृशंतु प्रकुर्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः।। (Sl. 9.169)।। उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गुढ़ उत्पन्नस्तस्य स्याद्यस्य तल्पजः।। (Sl. 9.170)।। माता--**

**दीप्तिः**

(15a) शूद्राणामतिदिष्टातिदिष्ट गोत्रभाजां स्वगोत्राविवाहमनेके स्वीकूर्वन्ति। भवदेवमते एतद्विषये यथा साधकवचनं नास्ति तद्वद्बाधकमपि नास्ति इति। अधुना प्रसंगतो द्वादशविधानां पुत्राणां परिगणनम्। तल्पः शय्या लक्षणया पत्नीग्राहकं पदमिदम्। तेन तल्पजः पत्नीजातः। तर्हि द्वादशबिधाः पुत्रास्तु एते-औरस-क्षेत्रज-दत्तक-कृत्रिम-गुड़ोत्पन्न-अपविद्ध-कानीन-सहोट्-क्रीत-पौनर्भव-स्वयंदत्त पारशराः। एतेषां मध्ये पुत्रिकापुत्रस्य न परिगणनम्। किञ्च-एषां षड्दायादाः बान्धवाश्चशिष्टाः अदायादाः बान्धवाः। विस्तरस्तु अग्रे द्रष्टव्यः। न च ज्ञायेत कस्य--अर्थात् अविज्ञातवीजिनो

---

36. स्वे क्षेत्रे इति पाठोऽपि दृश्यते।

37. प्राथमकल्पिकम् इति मेधातिथि गृहीतः पाठः। स एव समीचीनः। प्रथमकल्प + ठक् = प्राथम् –अन्ये केचन 'प्रथमकल्पितम्' इत्यपि पठन्ति। अहो लोकव्युत्पत्तेश्चातुरी।

मातृतः। एतच्च यत्र हीनजातीयपुरुषशङ्का नास्ति तदाशङ्कायां हि प्रतिलोमसम्भवः न क्वचित् पुरुषकार्याधिकारिणः इति मेधातिथिः॥

(15a) and not (Śūdra whose gotra is) *atidiṣṭātidiṣṭa* and this is the opinion of many. In fact for want of (supporting) statements this is not the proper procedure (order) and therefore enough of this discussion.

Now in connection with the Dattaka son twelve types of sons are being discussed. Manu (9.163) on that : only the *aurasa* son is the heir to the paternal wealth and the son produced by oneself in one's own ritually married wife should be known as *aurasa* son (son of the body and he is the foremost among the sons (natural and secondary) (M. 9.166). The son who is born in the wife, of a person dead or impotent or attacked with (incurable) disease, applied in levirate as per one's own custom is called Kṣetraja (born of levirate) (M. 9.164). He is to be known as Dattrima (Dattaka—adopted) son, who is equal (in social status or of equal caste as the adoptive father) (and) is given away by the mother and or father in times of danger (of inability to maintain) with water in hand (ie. as per procedure) (M. 9.168). He who is equal (in caste) well-versed in distinguishing merit from demerit, possessed of the qualities befitting a son, accepted as son is called the *kṛtrima* son (of the adopter) (M. 9.169). The boy born in a clandestine way in the house, the progenitor being unknown, becomes the son of him in whose wife it is born (and is called) *gūḍhotpanna* (=born secretly).

(15a) কিন্তু অতিদিষ্টাতিদিষ্ট গোত্রদের (অর্থাৎ শূদ্রদের) নহে এইরূপ অনেকে বলেন। বস্তুতঃ (অনুকূল) বচনের অভাবে ইহা উপযুক্ত ব্যবস্থা নয়—এ বিষয়ে আর বলার প্রয়োজন নাই।

ইহার পর এখন দত্তকপুত্র প্রসঙ্গে দ্বাদশবিধ পুত্রদের বিষয়ে বলা হইতেছে। সে বিষয়ে মনু বলেন—একমাত্র ঔরস পুত্রই পিতার ধনের অধিকারী। বিবাহ সংস্কারে সংস্কৃত নিজ বর্ণের ভার্যাতে নিজের উৎপাদিত পুত্রকেই ঔরস (এবং) মুখ্য পুত্র বলা উচিত (9.166.)।।(অপুত্র) মৃতব্যক্তির, ক্লীবের, দুশ্চিকিৎস্য ব্যাধিগ্রস্ত ব্যক্তির পত্নীতে স্বধর্মে নিরত নিয়োগ বিধি অনুসারে নিযুক্ত হইয়া (দেবরাদি সপিণ্ড দ্বারা) যে পুত্র উৎপাদিত হয় তাহাকে ক্ষেত্রজ পুত্র বলে (9.167)।। (দুর্ভিক্ষাদি) আপৎকালে

(অথবা গ্রাহকের পুত্রাভাবরূপ আপৎকালে) পিতা, মাতা প্রীতির সহিত (হস্তে) জলগ্রহণ করিয়া দানবিধি অনুসারে যে (সবর্ণ) পুত্রকে দান করেন তাহাকে দত্রিম বা দত্তক পুত্র বলা হয় (9.168)।। দোষগুণ বিচার বিচক্ষণ, পুত্রগুণযুক্ত এবং সমানজাতীয় যাহাকে পুত্ররূপে গ্রহণ করা হয় তাহাকে কৃত্রিমপুত্র বলা হয় (9.169)।। (অজ্ঞাত পুরুষ কর্তৃক) নিজ-ভার্যাতে গোপনে উৎপন্ন পুত্রকে মাতার স্বামীর গূঢ়োৎপন্ন পুত্র বলা হয় (9.170)।।

## 28. मूलम्

**(15B) (माता) पितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते।। (9.171)।। पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम्।। (9.172)।। या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती। वोढुः स गर्भो भवति सहोढ़ इति चोच्यते।। (9.173)क्रीणीयाद् यस्त्वपत्यार्थं माता पित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा।। (9.174)।। या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया। उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते।। (9.175)।। सा चेद्क्षतयोनिः स्याद् गतप्रत्यागताऽपि वा। पौनर्भवेण भर्त्रा सा पुनः संस्कारमर्हति।। (9.176)।। माता पितृविहीनो यस्त्यक्तो वा स्यादकारणात्। आत्मानं स्पर्शयेद्यस्मै स्वयं दत्तस्तु सः स्मृतः।। (9.177)।। यं ब्राह्मणस्तु--**

**दीप्तिः**

(15b) मन्वर्थमुक्तावल्याम् अत्र कुल्लुकभट्ट एवमाह--। स्वेक्षेत्रे स्वभार्यायां कन्यावस्थायामेव कृतविवाहसंस्कारायाम् इति। सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसपुत्रं विद्यादिति बौधायन- (2.2.14)दर्शनात् सजातीयायामेव स्वयमुत्पादित औरसो ज्ञेयः। व्याधितस्य प्रसवविरोधिव्याध्युपेतस्य। धर्मेण घृताभ्यक्तत्वादिनियोग- धर्मेण गुरुनियुक्तायां जातः क्षेत्रजः। 'शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकः तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः 'इति वशिष्टस्मरणात् माता पिता वा परस्परानुज्ञया यं पुत्रं परिग्रहीतुः समानजातीयं तस्यैव पुत्राभावनिमित्तायामापदि प्रीतियुक्तं न तु भयादिना उदकपूर्वं दद्यात् स दत्रिमाख्यः पुत्रो विज्ञेयः। पित्रोः पारलौकिकश्राद्धादिकरणा- करणाभ्यां गुणदोषौ

भवतः इत्येवमादिज्ञं पुत्रगुणैश्च मातापित्रोराराधनादियुक्तं पुत्रम्। क्रीतकः पुत्रः क्रेतुर्गुणैस्तुल्यो हीनो वा भवति। न तत्र जातितः सादृश्यवैसादृश्ये–"यजातीयेष्वयं प्रोक्तस्तनयेषु मया बिधि" रिति याज्ञवल्क्येन (2.136)सर्वेषाम् एव पुत्राणां स्वजातीयत्वाभिधानात्, तेन मानवेऽपि क्रीतव्यतिरिक्ताः सर्वे पुत्राः सजातीयाः बोध्यव्याः। त्यक्तः अकारणात्-त्यागोचितकारणं विना द्वेषादिना मातापितृभ्यां त्यक्तः आत्मानं यस्मै ददाति स स्वयंदत्ताख्यः तस्य पुत्रः मन्वादिभिः स्मृतः॥

(15b) The son, deserted by either of the parents or by both the parents and accepted as such by another is called the *apaviddha* son (of the adopter). The son, born in an unmarried daughter secretly (by some one) in her father's house becomes the *kānīna* son of the person who marries that girl. The son, born in a girl married with detected or undetected stage/sign of pregnancy is known as the *sahoḍha* type of son of such bridegroom. The son, (be he of the same caste or of different caste, purchased from his parents by payment is called *krītaka* son of the purchaser. The son, born of a man, in a woman who having been deserted by husband or dowagered takes shelter of this man of her own will, is called the '*paunarbhava*' son of the progenitor. This woman, if her first marriage is without consummation may be accepted by the second husband after observance of marriage ritual (called *paunarbhava-ṣṭoma*) a second time. [Kullūkabhaṭṭa gave here a queer explanation]. A son, orphanned or deserted without cause by the parents, if offers himself as a son to another becomes his 'Svayamdatta' son.

(15b) পিতামাতার উভয়ের অথবা যে কোনও একজনের দ্বারা পরিত্যক্ত পুত্রকে পুত্ররূপে গ্রহণ করিলে, তাহাকে অপবিদ্ধ পুত্র বলে (মনু 9.171)।। পিতৃ গৃহে কন্যাবস্থায় গোপনে (অন্য পুরুষের দ্বারা) যে পুত্র উৎপাদিত হয় তাহাকে বিবাহ্ কর্ত্তার কানীন পুত্র বলা হয়। (9.172)।। জ্ঞাত বা অজ্ঞাত গর্ভাবস্থায় বিবাহের পর ঐগর্ভে যে পুত্র জন্মায় তাহাকে পরিণেতার সহোঢ় পুত্র বলে। (9.173)।। অর্থের বিনিময়ে মাতা পিতার নিকট হইতে যে পুত্র ক্রয় করা হয় সে ক্রয়কারীর সবর্ণই হউক অসবর্ণই হউক—তাহাকে ক্রীতক পুত্র বলা হয়। (9.174)।। স্বার্থপরিত্যক্তা অথবা মৃতভর্ত্তৃকা যে নারী স্বেচ্ছায় অন্যপুরুষের ভার্যাত্ব স্বীকার করিয়া তাহা হইতে পুত্রের জন্ম দেয়—সেই পুত্র উৎপাদকের পৌনর্ভবপুত্র কথিত হয়। (9.175)।।

উক্ত স্ত্রী যদি অক্ষতাযোনি হইয়া অন্যের আশ্রয় নেয় তবে সেই স্বামী তাহাকে পুনরায় বিবাহসংস্কার সাধন করিয়া গ্রহণ করিতে পারে। (9.176)।। কুল্লূকভট্ট এস্থলে আর একপ্রকার ব্যাখ্যাও দিয়াছেন।। মাতাপিতৃহীন অথবা পিতামাতা দ্বারা অকারণে পরিত্যক্ত পুত্র যদি নিজেকে নিজে দান করে, তাহা হইলে তাহাকে গ্রহীতার স্বয়ংদত্ত পুত্র বলা হয়। (9.177)।।

## 29. मूलम्

**(16A) (यं ब्राह्मण) स्तु शूद्रायां कामादुत्पादयेत् सुतम्। स पारयेन्नेव शवस्तस्मात् पारशरः स्मृतः।। (9.178)।। दास्यां वा दासदास्यां वा यः शुद्रस्य सुतो भवेत् सोऽनुज्ञातो हरेदंशमिति धर्म्मो व्यवस्थितः।। (9.179)।। औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गुढ़ोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्।। (9.159) कानीनश्च सहोड़श्च क्रीतः पौनर्भवस्तथा। स्वयं दत्तश्च शैद्रश्च षड़दायादबान्धवाः।। (9.160)।। क्षेत्रजादीन् सुतानेतान् एकादशयथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः।। (9.180)।। इत्येतानि संहितायां नानास्थानस्थानि न तु सक्रमकाणि।। प्राथमकल्पिकं मुख्यं (मुख्यम्)। मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधम इत्युक्तेः क्रमशो न्यूनता इत्यर्थः। स्वधर्म्मेण घृतलक्षणादिना। आपदि ग्रहीतु--**

**दीप्तिः**

**(16a)** ग्रन्थनाम्नः लक्षणसंगतिं विधातुं प्रकृतमनुसरति औरसः क्षेत्रजश्चैवेत्यादि। एतेषाम् आदितः षट् पुत्राः दायादाः बान्धवाश्च। शिष्टाः षट् अदायादाः बान्धवाः। ते च क्षेत्रजादयः पुत्रप्रतिनिधिरूपेण स्वीकृताः।। मानवे अष्टमाध्याये (8.415) ध्वजाहृतादीनां दासीनां दासपत्नीनां उल्लेखः। तासु जातः शूद्रपुत्र इत्यादि। ननु अपुत्रोऽपि स्वकर्त्तृकं जीवच्छ्राद्धमनुतिष्टति पिण्डादिकं च वपति। पुत्रप्रतिनिधिसम्भवे जीवच्छ्राद्धविधेः आवश्यकता एव न स्यात् इति चेत्। न। जीवच्छ्राद्धे स्वयमेव स्वस्य प्रतिनिधिः स्यात् न तु पुत्रस्य, तस्य श्राद्धस्य पुत्रकर्त्तृकत्वाभावात् इति दत्तकमीमांसा (पृः 17, संयम भरतशिरोमणि)।

**(16a) The son, begotten in ( a married but) Śūdrā wife by a brahmin, owing to its ineligibility to offer *piṇḍas* etc. in a *śrāddha* (to manes) even while living becomes a corpse as it**

were (Śava) and therefore is called Pāraśava by wise men. (Different types of Dāsī and Dāsapatnī like Dhvajāhṛtā etc. are spoken of in Manu 8.415). In such female slaves, a son begotten by a Śūdra (is called Śaudra and) on the consent of that Śūdra father becomes eligible to receive share of paternal wealth like *aurasa* sons—this is the decision as per scriptures.

Aurasa, Kṣetraja, Dattaka, Kṛtrima, Gūḍhotpanna and Apaviddha—these six types of (primary and secondary) sons are eligible to receive, paternal property and to offer *piṇḍa* and the like in *śrāddha* etc.

Kānīna, Sahoḍha, Krīta, Paunarbhava, Svayamdatta and Śaudra, these six types of (secondary) sons do not become heirs (to ancestral property) but they can offer *piṇḍa* etc. in works like *Śrāddha* etc.

Wise men call these eleven types of sons, as narrated, substitutes of the (primary i.e. *aurasa*) son considering the cessation of works (like continuity of the family and offering of *piṇḍa* etc. in the absence of sons). These verses appear of various places in the *(Manu) Saṃhitā* and are not to be treated as given seriatim. (In the above quotations) the expression '*prāthama kalpikam*' means main, chief. Mukhya or chief in the first *kalpa*, *anukalpa* is inferior to that. From this statement (other sons are) gradually lower in status—this is the purport. (Again) '*svadharmeṇa*' means 'by observance of rules like anointing the body with butter oil and so on. '*Āpadi*' means in danger like absence of sons of the adoptive father

(16a) ব্রাহ্মণ (পরিণীতা) শূদ্রাতে কার্যতঃ যে পুত্র উৎপন্ন করে, ঐ পুত্র জীবদ্দশায় উহার শ্রাদ্ধাদিতে অযোগ্যতা প্রযুক্ত শবতুল্য হয়—মৃততুল্য হয় ও এইজন্য পণ্ডিতগণ তাহার নাম পারশব বলিয়া থাকেন। (ধ্বজাহৃতা প্রভৃতি যে দাসী ও দাসপত্নীর লক্ষণ মনু অষ্টম অধ্যায়ে বলা হইয়াছে তাদৃশ) দাসীতে শূদ্রদ্বারা উৎপন্ন সন্তান ঐ শূদ্র পিতার ইচ্ছাতে তাহার ঔরস পুত্রের তুল্য ভাগী হইবে, ইহা শাস্ত্রীয় ব্যবস্থা। ঔরস, ক্ষেত্রজ, দত্তক, কৃত্রিম, গূঢ়োৎপন্ন ও অপবিদ্ধ এই ছয় প্রকার পুত্র (সগোত্র) ধনাধিকারী ও পিণ্ডতর্পণের অধিকারী বন্ধু হয়।। কানীন, সহোঢ়, ক্রীত, পৌনর্ভব, স্বয়ংদত্ত ও শৌদ্র ইহারা (সগোত্র বা ভিন্নগোত্র যাহাই হউক না কেন) ধনাধিকারী হইতে পারে না, কেবল শ্রাদ্ধ পিণ্ডদানের অধিকারী হয়। পুত্রোৎপাদন

বিধির ও শ্রাদ্ধাদিক্রিয়ার যাহাতে লোপ না হয় তন্নিমিত্ত ক্ষেত্রজাদি একাদশপ্রকারকে পণ্ডিতগণ পুত্রপ্রতিনিধি বলিয়াছেন।

এই সমস্ত শ্লোক (মনু) সংহিতার (নবম অধ্যায়ে) নানাস্থানে স্থিত, ইহাদের ক্রম অনুযায়ী (এই গ্রন্থে) লেখা হয় নাই। পূর্বোক্ত—'প্রাথমকল্পিক' শব্দের অর্থ মুখ্য। মুখ্যই প্রথম কল্প হয়। অনুকল্প তাহা হইতে হীন—এই বচনবশত কথিত পুত্রগণের উত্তরোত্তর ক্রমশঃ হীনতা বুঝিতে হইবে।

উদ্ধৃতিতে 'স্বধর্মেণ, পদের অর্থ—(সর্বাঙ্গে) ঘৃত লেপন (মৌনপালন) ইত্যাদি ধর্মের সহিত। 'আপদি' পদের অর্থ পুত্র গ্রাহকের (পুত্রাভাবরূপ বিপদে)

## 30. मूलम्

**(16B) (ग्रहीतु) रेव पुत्राभावरूपायामापदि। न तु दातुः, सदृशं सवर्णं प्रीतिसंयुक्तं न तु भयादियुक्तम्। दत्रिमोदानान्निष्पन्नः। पौनर्भवेण पौनर्भवष्ठोमाख्य--यागेन। पारशरः पारयन्नेव समर्थोऽपि शवतुल्यकर्म्मानर्ह इति। शूद्रस्य दासदास्यां दास्याम्वेत्यादिना। अत्र पितृधने औरसस्यैवाधिकारः एक एवौरसः पुत्र इत्यादिनोक्तः। तदभावे धनाधिकारं विवृणोति तेषां षड्बन्धुदायादा इति प्रथमोपस्थितत्वात् तेषां पूर्वषण्णां मध्यो यो यस्तिष्ठति स बन्धुर्ज्ञाति दायादो धनाधिकारीति सामान्यतः षण्णामेकधर्मवत्त्वादुक्तम्। उत्तरार्धगताः षट् अदायादा धनानधिकारिणोऽपि बान्धवा बन्धुकार्यमुदकं कुर्य्युः। तत्र औरसतुल्यत्वेन पुत्रिकापुत्रेनाभिहितः औरसेनार्द्धांशस्य वक्ष्यमाणत्वात्।**

**दीप्तिः**

(16b) ये अदायादाः पुत्रास्तेऽपि बन्धुकार्यम् उदकदानेन तर्पणादिकं कर्त्तुं प्रभवन्ति, गोत्रभाजश्च भवन्ति बौधायनादिभिस्तथा स्वीकारात्।। दत्रिमशब्दस्तु दाधातौ त्रिमप् प्रत्यययोगेन। डुदाञ् दाने इति दाधातौ ड्वितः क्त्रि (p. III. 3.88)। क्त्रेर्यम्नित्यम् (IV. 4.20)। इति सूत्रद्वयेन दा + त्रिमप् इत्यवस्थायां-- "दोदद् यः अच् उपसर्गान्त तः (VII. 4.46, VII 4.47)इत्याभ्याम् दाधातोः दत् आदेशे दत् + त्रिम = दत्रिम पदं सिध्यति।

(16b) and not the absence of the son of the giver. Here '*sadṛsa*' means "of the same caste". "*pritisamyuktam*"—is

with pleasure or affectionately and not fearfully. 'Dattrima' is by gift "*Paunarbhavena*" means by a ritual named *paunarbhavaṣṭoma*. Pāraśava is while helping in crossing is incapable of doing prescribed rituals and therefore as useless as a corpse *(Śava)*. Of the Śūdra, in Dāsadāsī or Dāsī. Now, in paternal wealth only the natural son or aurasa is the heir and this is told in *eka evaurasaḥ putraḥ* etc. In the absence of such ie. aurasa—the heirs to the paternal wealth are described. Of them six are (technically called) *Bandhu* or *Jñāti* and at the same time they have right to inherit because their names are taken first, so the first six according to their position in the enumeration list whoever remain (these) become Bandhu and Dāyāda (ie. heir) because they possess one common quality. The other six named in the second part of the quotation (Manu. 9.160) although cannot inherit, as Bandhu they should offer libations of water etc. which is their duty. Here the Putrikāputra is not (separately) mentioned as he is of equal status[38] as the *Aurasa* and it will be said later on that *Aurasa* will get half share.

(16b) (দাতার পুত্রাভাবরূপ আপদে নহে)। সদৃশম্ অর্থাৎ সমানবর্ণ (পুত্র গ্রহণ করিবে); প্রীতিসংযুক্তম্ = প্রীতির সহিত, ভয়ভীত হইয়া নয়। দত্রিম শব্দের অর্থ দাননিষ্পন্ন। পৌনর্ভবেণ অর্থাৎ পৌনর্ভবষ্টোমনামক যাগের দ্বারা পারশব অর্থাৎ উত্তরণ করাইতে সমর্থ হইলেও শবের মত কর্মের অযোগ্য। শূদ্রের (দ্বারা) দাসদাস্যাম্ এইরূপ বলা হইয়াছে অথবা দাসীতে ইত্যাদি। পিতৃধনে ঔরসেরই অধিকার এক এবৌরসঃ পুত্রঃ ইত্যাদি বচনের দ্বারা বলা হইয়াছে। সেই ঔরসপুত্রের অভাবে ধনাধিকারী কে হইবে তাহা বলা হইতেছে। তাহাদের মধ্যে ছয়জন বন্ধু (পারিভাষিক শব্দ) ও দায়াদ বা উত্তরাধিকারী এই বলিয়া ছয়জনের নাম প্রথমে বলা হইয়াছে বলিয়া সেই ছয়জনের মধ্যে যাহার যেমন অবস্থান সে বন্ধু বা জ্ঞাতি এবং দায়াদ, দায়াদ বা ধনাধিকারী সাধারণভাবে ছয়জনেরই একধর্ম থাকার জন্য। উদ্ধৃতির শেষার্ধ কথিত ছয়জন ধনের অনধিকারী হইলেও তাহারা বন্ধু বা জ্ঞাতি, তাহারা বন্ধুকৃত্য বা

38. for this see Manu 9.127-140 specially 9.134 which runs as follows :
पुत्रिकायां कृतायान्तु यदि पुत्रो'नुजायते ।
समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः ॥
Also see Kullakabhaṭṭa on Manu 9.187 Yaj. II. 129.

জ্ঞাতিকৃত্য তর্পণাদি করিবে। এই প্রসঙ্গে ঔরসপুত্রের তুল্য পুত্রিকাপুত্রের কথা বলা হয় নাই—কারণ ঔরসপুত্রের দ্বারা অর্ধাংশ গ্রহণের কথা পরে বলা হইবে—তাই। (মনু 9.187র ব্যাখ্যা প্রসঙ্গে মন্বর্থ মুক্তাবলী দ্রষ্টব্য)।

## 31. मूलम्

**(17A) बौधायनः। औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ। गुट्श्चैवापबिद्धश्च रिक्थभाजं प्रचक्षते।। काणीनश्च सहोट्श्च क्रीतश्च पौनर्भवस्तथा। स्वयं दत्तं निषादश्च गोत्रभाजं प्रचक्षते।। (बौधायनः 2.2.31-32) ।। अत्र पूर्व्वषण्णां धनभागित्वमात्राभिधानात् कैमुतिकन्यायात् गोत्रभागित्वमपि सिद्धम्। उत्तरषण्णां गोत्रभागित्व विशेषणात् न धनाधिकार इति सूचितं वचनान्तरात्। कालिकापुराणम् -- (88.35-38) औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गुटोत्पन्नोऽपविद्धश्च भागार्हास्त्तनया इमे [स्तनया इमे]।। कानीनश्च सहोट्श्च क्रीतः पौनर्भवस्तथा। स्वयं दत्तश्च पौष्यश्च [शौद्रश्च] षड़िमे पुत्रपांशलाः।। न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत्। पितृणां शुद्धये नित्यमौरसे तनये सति। अभावे पूर्व्व पूर्व्वेषां परान् समभिषेचयेत्। पौनर्भवं स्वयं दत्तं दासं राज्ये न योजयेदिति। अत्रापि पूर्व्वषण्णां भागार्हत्वमुक्तं गोत्रभागित्वन्तु--**

**दीप्तिः**

(17a) बौधायनधर्मसूत्रेषु (2.2.31-32) स्वीकृतानां पुत्राणामयं क्रमः—औरस-पुत्रिकापुत्र-क्षेत्रज-दत्तक-कृत्रिम-गूट्-अपबिद्धाः रिक्थभाजः पुत्राः। तेषां गोत्रभाक्त्वं स्वयमेव सिद्धम्। अन्येषां कानीन-सहोट्-क्रीत-पौनर्भव-स्वयंदत्तनिषादानां केवलं गोत्रभाक्त्वम्। यद्यपि पुत्राणां द्वादशविधत्वं सामान्येन स्वीकृतम् अत्र पुत्रिकापुत्रम् आकलय्य साकल्येन त्रयोदश एव पुत्राः परिगणिताः। एतेषु अैरसे तनये स्थिते सति क्षेत्रजादीनां राज्ये अभिषेचनं न कार्यम्।

(17a) Baudhāyana (says), *Aurasa, Putrikāputra, Kṣetraja, Dattaka, Kṛtrima, Gūḍhotpanna* and *Apaviddha* are considered eligible to inherit property. *Kānīna, Sahoḍha, Krīta, Paunarbhava, Svayamdatta,* and *Niṣada* are called only cognates. Here also, by calling the first six as inheritors—their status as cognates is automatically settled. Of the latter

group of six, the use of the adjective cognate indicates the absence of their right to inherit, by a separate mention of the facts. Kālikāpurāṇa (has) : *Aurasa, Kṣetraja, Dattaka, Kṛtrima, Gūḍhotpanna, Apaviddha* sons are persons fit to inherit, (whereas) *Kānīna, Sahoḍha, Krīta, Paunarbhava*, Svayamdatta and Pauṣya sons are disgraceful as sons. For the purification of the forefathers (living in hell) the king should not place on throne sons like *Kṣetraja etc.* when there is an *Aurasa* son. In the absence of the previous ones the succeeding ones are to be crowned. The Paunarbhava, Svayaṃdatta and Dāsa (types of sons) are not to be crowned at all. Here also, eligibility to inherit—in the case of the former six types of sons has been expressed and their status as cognates is indicated by separate reference.

(17a) বৌধায়ন ধর্মসূত্রে (২য় প্রশ্ন, ২য় অধ্যায়, সূত্র ৩১-৩২) আছে—ঔরস, পুত্রিকাপুত্র, ক্ষেত্রজ, দত্তক, কৃত্রিম, গূঢ়োৎপন্ন এবং অপবিদ্ধ পুত্রদের রিক্‌থভাক্ বা ধনাধিকারী বলে। কানীন, সহোঢ়, ক্রীত, পৌনর্ভব, স্বয়ংদত্ত, নিষাদ ইহাদের (কেবলমাত্র) গোত্রভাক্ (=জ্ঞাতি) বলা হয়। এই স্থলে প্রথম ছয় জনকে (পুত্রিকাপুত্র হইতে অপবিদ্ধ) শুধু ধনাধিকারী বলা হইয়াছে, তাহাদের গোত্রভাগিত্ব কৈমুতিকন্যায়ে স্বতই সিদ্ধ হইয়াছে। পরবর্ত্তী ছয়জনের গোত্রভাগিত্ব এই বিশেষণের জন্য ধনভাগিত্ব নাই। পৃথক্ বচনের দ্বারা নির্দেশ করায় ইহা জ্ঞাপিত হইয়াছে।

কালিকা পুরাণে—ঔরস, ক্ষেত্রজ, দত্তক, কৃত্রিম, গূঢ়োৎপন্ন, অপবিদ্ধ ইহারা ধনের ভাগলাভের যোগ্য। কানীন, সহোঢ়, ক্রীত, পৌনর্ভব, স্বয়ংদত্ত ও পৌষ্য এই ছয়জন নিন্দিত পুত্র।। পিতৃপুরুষের শুদ্ধির জন্য ঔরসপুত্র বর্তমান থাকিতে রাজা ক্ষেত্রজাদি পুত্রদের রাজ্যে অভিষিক্ত করিবেন না। (প্রথমোক্ত ছয় জনের মধ্যে) পূর্বপূর্বের অভাবে পরবর্ত্তীকে রাজ্যে অভিষিক্ত করিবেন। (কিন্তু) পৌনর্ভব, স্বয়ংদত্ত ও দাস (=শৌদ্র?) পুত্রকে রাজ্যের ভার দিবেন না।

এখানেও প্রথমোক্ত ষটকের ধনাধিকারিত্ব বলা হইয়াছে। তাহাদের গোত্রভাগিত্বের কথা পৃথক্ বচন দ্বারা সিদ্ধ।

## 32. মূলম্

(17B) বচনান্তরাত্ সিদ্ধম্। যাজ্ঞবল্ক্যঃ (II. 129-132)ঔরসো ধর্ম্মপত্নীজস্তত্ সমঃ পুত্রিকাসুতঃ। ক্ষেত্রজঃ ক্ষেত্রজাতশ্চ স্বগোত্রেণেতরেণ বা।। গূহে প্রচ্ছন্ন

**उत्पन्नो गूढ़जः स सुतः स्मृतः। कानीनः कन्यकाजातो माता (Redundant)मातामहसुतश्च सः॥ अक्षतायां क्षतायाम्बा जातः पौनर्भवो मतः। ददान्माता पिता वा यं स पुत्रो दत्तकः स्मृतः। क्रीतस्तु ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः॥ दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढ़जः। उतसृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः॥ पिण्डोदोऽर्थहरश्चैषां पूर्व्वाभावे परः परः॥ अत्र पुत्रिकापुत्रस्यौरसतुल्यत्वेनाभिधानात् दत्तकः षष्ठो भवति। नारदः (दायभाग - 45-47) औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च। कानीनश्च सहोढ़श्च गूढ़ोत्पन्नस्तथैव च॥ पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा। स्वयमेवागतः[39] पुत्रो--[द्वादशैते प्रकीर्त्तिताः]**

**दीप्तिः**

(17b) अधुना याज्ञवल्क्यमतानुसारं (Yāj II. 128-132)पुत्राणां लक्षणं निरूप्यते। मनुवचने पुत्रिकापुत्रो विशेषतो नाभिहितः औरसतुल्यत्वात्। याज्ञवल्क्यवचने किन्तु पुत्रिकापुत्रं गृहीत्वा साकल्येन द्वादशविधाः पुत्राः। नारदवचनस्मरणम् तथैव। क्षेत्रं पत्नी-तस्यां जातः क्षेत्रजः। क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोरिति कोषग्रन्थः। अपुत्रेण-परक्षेत्रे नियोगोत्पादितः सुतः इत्यादि याज्ञवल्क्यश्लोकेन (II. 130) उभयसम्बन्धिरिक्थहरत्वमुक्तं तत् क्षेत्रिकपितुरौरसपुत्राभावेबोद्धव्यम् इति कुल्लुकभट्टवचनं (मनु 9.162)--चिन्त्यम्। पुत्राभावे नियोगकल्पनस्य सम्भवत्वात्। द्व्यामुष्यायणभिन्नः नियोगजः पुत्रः वीजिनः पितुः न धनभाक् न वा पिण्डदाता।

(17b) Yājñavalkya (II. 129-132) has : *Aurasa* son is born in ritually married wife, equal to him in status is Putrikāputra (daughter's son accepted as son), *Kṣetraja* son is born in *Kṣetra* (ie. wife of a sonless man) by one cognate or agnate; *Gūḍhaja* son is clandestinely born in the house in wife, *Kānīna* is the son of the unwedded mother—considered as the son (ward) of the maternal grand-father, *Paunarbhava* is the son of the remarried women fornicated or not (in the previous marriage). *Dattaka* is given as such by either of the parents (to an adoptive father). He, who is sold by parents (as son to some one), is *Krīta*, and *Kṛtrima* son is one who

39. मुद्रितनारदस्मृतौ—स्वयञ्चोपागतः पुत्राः द्वादशैते उदाहृताः।

draws or attaches himself to one (to become his son). *Sahoḍhaja* is the son whose mother during pregnancy (having this baby in the womb) is married. *Apaviddha* is that type of son who having seen deserted by either or both of the parents is adopted as son by a stranger. Of these, in the absence of the preceding one the succeeding one becomes eligible to inherit (father's) property and to offer *piṇḍa* (to the departed). Here, in this list the *Putrikāputra* is taken as equal in status to the primary ie. the *Aurasa* son, hence the Dattaka son takes the sixth place.

Narada says : Aurasa, Kṣetraja, Putrikāputra, Kānīna, Sahoḍha, Gūḍhotpanna, Paunarbhava, Apaviddha, Dattaka, Krīta, Kṛta and Svayamupāgata—these twelve types of sons are enumerated—

(17b) যাজ্ঞবল্ক্য (II. 129-132) সমানবর্ণা, ধর্মানুসারে বিবাহিতা পত্নীর গর্ভজাত পুত্রের নাম ঔরসপুত্র (এই পুত্র মুখ্য। তাহার পরে) পুত্রিকাপুত্র (অপুত্রক পিতার কন্যার বিবাহের পরে জাত পুত্র, যে বিবাহের পূর্বে স্বীকৃত শর্ত অনুযায়ী মাতামহের পুত্রস্থানীয় সেও) ঔরসতুল্য। সগোত্র হইতে বা সপিণ্ড (দেবর আদি) হইতে অপুত্রক ব্যক্তির ক্ষেত্র বা পরিণীতা ভার্যার নিয়োগ দ্বারা উৎপন্ন পুত্র ক্ষেত্রজ, স্বামি গৃহেই গুপ্তভাবে (উচ্চবর্ণ বা নীচবর্ণ পুরুষ হইতে না জন্মিয়া এবং কোন পুরুষ হইতে জন্মিয়াছে ইহার নিশ্চয় না থাকিলেও সমান বর্ণের পুরুষ হইতে) পরিণীতা স্ত্রীতে উৎপন্ন (এই মাত্র নিশ্চয় থাকিলে ঐ পুত্রের নাম) গূঢ়জ পুত্র, কুমারী অবস্থায় (সমানবর্ণ পুরুষ হইতে) উৎপন্ন পুত্র কানীন, ইহা মাতামহেরই পুত্ররূপে স্বীকৃত। অক্ষতযোনি (অনুপভুক্তা) বা ক্ষতযোনি (উপভুক্তা) নারীর পুনরায় বিবাহ দিলে নারী পুনর্ভূ হয়, তাহার গর্ভজাত (সবর্ণ পুরুষ হইতে উৎপন্ন) পুত্রকে পৌনর্ভব বলে। মাতা বা পিতা (অথবা উভয়ে) (আপৎকাল) যে পুত্রকে সজাতীয়ের হস্তে দান করে সে দত্তক বা দত্রিম পুত্র। পিতা ও মাতা উভয়ে (অথবা যে কেহ অভাবে পড়িয়া জ্যেষ্ঠ ভিন্ন) যে পুত্রকে সমানবর্ণ ব্যক্তির কাছে বিক্রয় করে সেই পুত্রের নাম ক্রীতপুত্র। (মাতাপিতৃহীন যে বালককে (পুত্রহীন ব্যক্তি) নিজে (ধনাদি দ্বারা) আকর্ষণ করিয়া পুত্ররূপে গ্রহণ করে সে কৃত্রিম পুত্র। (মাতাপিতৃহীন বা মাতাপিতৃপরিত্যক্ত বালক) যদি নিজে (আমি আপনার পুত্র, আমাকে গ্রহণ করুন—এই উক্তির দ্বারা) আত্মসমর্পণ করে তবে সে স্বয়ংদত্ত পুত্র। মাতৃগর্ভে অবস্থান কালে গর্ভিণী মাতার বিবাহের পরে জাত পুত্র সহোঢ়জ নামে খ্যাত হয় (এই পুত্র তাহার মাতার পরিণেতার

পুত্ররূপে গণ্য)। মাতা পিতা উভয়ের দ্বারা পরিত্যক্ত ও পরে অপরের দ্বারা পুত্ররূপে গৃহীতকে (গ্রহীতার) অপবিদ্ধ পুত্র বলে। এই সব পুত্রদের মধ্যে পূর্ব পূর্ব পুত্রের অভাবে পরপর নির্দিষ্ট পুত্রই পিতার পিণ্ডদাতা ও ধনাধিকারী হইবে।

পুত্রিকাপুত্রকে ঔরস পুত্রের সমান বলায় দত্তক পুত্র ষষ্ঠ (যথা ঔরস, পুত্রিকাপুত্র, ক্ষেত্রজ, গূঢ়জ, কানীন, পৌনর্ভব, দত্তক, ক্রীত, কৃত্রিম, স্বয়ংদত্ত, সহোঢ়জ, অপবিদ্ধ)।। নারদ (দায় ভাগ-45-46) (বলেন)—ঔরস, ক্ষেত্রজ, পুত্রিকাপুত্র, কানীন, সহোঢ়, গূঢ়োৎপন্ন, পৌনর্ভব, অপবিদ্ধ, দত্ত (ক), ক্রীত, কৃত (=কৃত্রিম) ও স্বয়মুপাগত (=স্বয়ংদত্ত) এই দ্বাদশ প্রকার পুত্র উদাহৃত হয়।

## 33. मूलम्

**(18A) द्वादशैते प्रकीर्त्तिताः। तेषां षड्वन्धुदायादाः षडदायादवान्धवाः। पूर्व्वः पूर्व्वः स्मृतो ज्यायान् जघन्यो यो य आप्नुयात्।।[40] एवं यमविष्णुसम्बर्त्तादयोऽपि तुल्यामेवाहुः।[41] देवलस्तु[42] उत्तरषट्कमध्ये दत्तकमभिधाय तेषां पितृधन एवाधिकारमाह न तु बन्धुधने। यथा देवलः[43]--औरसः पुत्रिकापुत्रः क्षेत्रजः कन्यकोद्भवः। गूढ़ोत्पन्नोऽपविद्धश्च सुतः पौनर्भवस्तथा।। दत्तः स्वयमुपेतश्च लब्धः क्रीतः कृतस्तथा। एते द्वादश-पुत्रास्तु सन्त(त्य)र्थमुदाहृताः। आत्मजाः**

---

40. दायभागधृतं नारदवचनं– एषां षड्बन्धुदायादाः .....जघन्यो यो य उत्तरः।। मुद्रितनारदस्मृतौ अपि स एव पाठः। दायभागः (जीवानन्द संस्करणम्) पृः 147।

41. "तुल्य मेवाहुः"-- इति हि साधीयान्। विष्णु धर्मसूत्रे पञ्चदशे अध्याये द्वादशपुत्रवर्णनम्। तत्र दत्तकश्च अष्टमः। उनविंशतिसंहिता (वङ्गवासी सं)यम् यमस्मृतिमध्ये तथा सम्वर्त्तस्मृति मध्ये ईदृशः प्रसङ्गो नास्ति। दत्तकचन्द्रिकाधृतं (पृः 29) यमवचनं......षड़ते पिण्डदायिनः।।... इत्येते सङ्करोत्पन्नाः षड़दायादवान्धवाः।। तथैव (28 पृष्ठायाम) विष्णुः-- तेषां पूर्वः पूर्वः श्रेयान्। स एव दायहरः स चान्यान् विभृयात्। यमवचनं विवादचिन्तामणौ 229 पृष्ठायां, विष्णुवचनं च 231-232 पृष्ठयोः उद्धृतम्।

42. See *History of Dharmashastra*, Vol. III p. 645 for a comparative chart of the different types of sons as given in different text.

43. दत्तकचन्द्रिकाधृतं देवलवचनम्--दत्तकचन्द्रिका - पृः 29 (यम भरतशिरोमणि सम्पादिता) दायभागधृतं देवलवचनम्। दायभागः (सं-जीवानन्द) पृः 147। "अत्र दायभागवचनमपि प्रासङ्गिकम्। औरसादयः षट् पुत्रा न केवलं पितृदायहराः, किन्तु वन्धुनामपि सपिण्डादीनां दायहराः, अन्ये परभुताः पितुरेव परं दायहराः न सपिण्डादीनाम्।।" (तत्रैव 147 पृष्ठायाम्)।

**परजाश्चैव लब्धा यादृच्छिकास्तथा। तेषां षड् बन्धुदायादाः पूर्व्वेऽन्ये पितुरेव षट्। विशेषश्चापि पुत्राणामानुपूर्वजा --**

**दीप्तिः**

(18a) यमविष्णुसम्बर्त्तादीनां ग्रन्थे नारदादि प्रोक्ता व्यवस्था एव अनुसृता। किन्त्र पुत्राणामानुपूर्व्वीविषये शास्त्रकारेषु मतभेदो वर्त्तते। स च P.V. Kaneमहोदयेन स्वकीये धर्म्मशास्त्रेतिहासग्रन्थे (तृतीयखण्डे) सारणीमध्ये स्हापितः। तदर्थं द्रष्टव्योऽसौ ग्रन्थः।

(18a) of them, six are considered cognates and heirs and six cognates but not heirs, the preceding one is more desirable and the succeeding one undesirable—lower. Thus, Yama, Viṣṇu, Samvartta and others spoke like Nārada, Devala, however, enumerating the *Dattaka* son in the latter group of six opined that such a son has right to inherit to father's property only and not to that of kinsmen. Thus Devala (has): *Aurasa, Putrikāputra, Kṣetraja, Kānīna, Gūḍhotpanna, Apaviddha* are sons and so also are *Paunarbhava, Datta, Svayamupeta, Labdha, Krīta, Kṛta.* These twelve types are considered as sons in scriptures. These are born of the self or from others or received voluntarily as sons. Of them the first six are cognates and inheritors to property of kinsmen (and of the father as well where as) the other six inherit only the father's property (and not of Kinsmen). The speciality of (these) sons is being specified in due order—

(18a) তাহাদের মধ্যে পূর্বোক্ত ছয়জন বন্ধুপদবাচ্য ও ধনাধিকারী (অথবা পিতামহাদি আত্মীয়দেরও ধনাধিকারী) এবং অন্য ছয়জন ধনের অনধিকারী কিন্তু বন্ধুকৃত্য পিণ্ডদানাদির অধিকারী। ইহাদের মধ্যে পূর্ব পূর্ব সন্তান প্রশস্ত আর পরবর্ত্তী ক্রমশ: হীন বা অপ্রশস্ত। এই ভাবে যম বিষ্ণু সম্বর্ত্ত প্রভৃতিও নারদের মতই বলিয়াছেন। দেবল কিন্তু পরবর্ত্তী ছয়পুত্রের মধ্যে দত্তকের পরিগণন করিয়া—তাদৃশ পুত্রদের কেবলমাত্র পিতার ধনেতে অধিকার স্বীকার করিয়াছেন বন্ধুদের ধনে স্বীকার করেন নাই। যথা দেবল বচন—ঔরস, পুত্রিকাপুত্র, ক্ষেত্রজ, কানীন, গূঢ়োৎপন্ন, অপবিদ্ধ পুত্র এবং পৌনর্ভব, দত্তক, স্বয়মুপাগত, লব্ধ, ক্রীত এবং কৃত এই দ্বাদশ পুত্রের নাম সন্তান প্রসঙ্গে উদাহৃত হইয়াছে। ইহারা আত্মজাত বা পরজাত কিম্বা স্বেচ্ছায় পুত্ররূপে

লব্ধ। ইহাদের মধ্যে (প্রথম) ছয়জন বন্ধুদায়াদ, অন্য ছয়জন কেবলমাত্র পিতৃধনের অধিকারী। এই পুত্রদের বৈশিষ্ট্য যথাক্রমে—বলা হইতেছে—

## 34. मूलम्

**(18B) द्विशिष्यते। सर्व्वे ह्यनौरसस्यैते पुत्रा दायहराः (स्मृताः)। औरसे पुनरुत्पन्ने तेषां ज्यैष्ठ्यं न विद्यते। तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः। हीनास्तमुपजीवेयुर्ग्रासाच्छादन सम्भृताः।। अयमर्थः-- वहवश्चेत्तु सदृशाः पुत्रा दायहराः पितुरिति मनूक्त[44]मजातीयपुत्राणां धनभागित्वमनूद्य विजातीयानां विशेषमाह आनुपूर्व्व्यादिति। पूर्व्वं पूर्व्वं अनु पश्चात् अनुपूर्व्वं तस्मात् स्वार्थ-यणि आनुपूर्व्व्य प्रातिपदिका यवर्थ पञ्चम्या पूर्व्वं पूर्व्वमपेक्ष्य इत्यर्थः। तृतीयान्तपाठोऽपि करणसाधनं (साधनः)। ततः आत्मजापेक्षया परजास्तदपेक्षया लब्धास्तदपेक्षाय यदृच्छोपपन्ना गौणाः। धनाधिकारित्वमाह--अपविद्धान्ताः पूर्व्वोक्ताः षट् सत्यौरसे क्रमेण बान्धवो ज्ञातयो दायस्य--**

**दीप्तिः**

(18b) देवलवचनधृतस्य आनुपूर्व्यात् पदस्य व्युत्पत्तिं दर्शयति-पूर्वं पूर्वम् अनु पश्चात् इति अनुपूर्वम्। यवर्थपञ्चम्या इत्यादिभिः भवदेवेन पाणिनीयेतरं किमपि व्याकरणं प्रतिपादितम्।

(18b) All these sons are inheritors to the property of a man without aurasa son. However, when an aurasa son is born, these sons lose their seniority. Of them, the sons who are of the same caste as of the adoptive father, receive one third of the wealth, others of the inferior caste depend upon in (the aurasa son) receiving maintenance (only). The impart in this: "If there be several sons of the same caste—they inherit the paternal property"—thus recording the hight to property of the sons of the same caste as told by Manu (9.184 ed) the special steps for sons of different castes are told by *ānu-pūrvyāt* (in due order).

The word *ānupūrvyāt is* thus derived : *pūrvam pūrvam*

---

44. Manu 9. 184 ed. VL. वहवश्चेत्तु सदृशाः सर्वेरिकथस्यभागिनः।।

*anu (avyayībhāva* compound meaning after the each former) is *anupūrvam*, from that word, adding to it the suffix *yaṇ* [the sense of self same or *svārtha* one gets the *prātipadika* (uninflected word) *ānupūrvya*, adding *yavartha pañcamī*— one gets *ānupūrvyāt* [according to Paninian system from *avyayībhāva* compound we get *anupūrvam*, adding *svārthe ṣyañ*—the word becomes *ānupūrvya*, then in the fifth case ending, sanctioned by *lyavlope karmany adhikaraṇe ca*—a vārttika on Pāṇini 1.4.31—we get the word *ānupūrvyāt*] meaning considering/resultant to/relating to the previous. If one reads *ānupūrvyī* in the third case ending the sense is "by the *ānupūrvī* or serial order. Thus after the primary son, the sons other than the labdha (gained/acquired) sons and after then the sons received accidentally or by chance ie. all the secondary sons. Their right to property is thus narrated. In the presence of an *aurasa* son, the six sons upto *apaviddha* (in the list) enumeration the first group in due order become *bandhu, jñāti* and inheritors (of one third of the property of the kinsmen)—

(18b) এইসকল পুত্র ঔরসপুত্রহীন পিতার ধনে অধিকারী। (দত্তকাদি গ্রহণের পর) ঔরসপুত্র জন্মাইলে তাহাদের আর জ্যেষ্ঠত্ব থাকে না। তাদৃশপুত্রদের মধ্যে যাহারা পিতার সমান জাতির, তাহারা ধনের তৃতীয়াংশ পাইবে। যাহারা হীনজাতীয় তাহারা সবর্ণ ভ্রাতাদের অবলম্বন করিয়া গ্রাসাচ্ছাদনভাগী হইয়া থাকিবে। ইহার তাৎপর্য—যদি অনেক পুত্র থাকে তবে সজাতীয় পুত্রেরা পিতার ধনের অধিকারী— এই মনু বচনে (9.184cd) সবর্ণপুত্রদের ধনভাগিত্ব অনুবাদ করিয়া (পুনঃ কথন করিয়া) বিজাতীয় (অসবর্ণ) পুত্রদের বিষয়ে বিশেষ বিধানের কথা বলিতেছেন— আনুপূর্ব্যাৎ=পূর্বং পূর্বম্ অনু পশ্চাৎ=অনুপূর্বম্—তাহাতে স্বার্থে যণ্ প্রত্যয়যোগে আনুপূর্ব্য এই প্রাতিপদিকের উত্তর যবর্থ পঞ্চমী দ্বারা (পাণিনি মতে ল্যবলোপে পঞ্চমী করিয়া) পূর্ব পূর্বটির অপেক্ষা করিয়া এই অর্থ। তৃতীয়ান্ত অর্থাৎ আনুপূর্ব্যা এই পাঠ ধরিলে সাধক অর্থাৎ করণে তৃতীয়া (অর্থাৎ আনুপূর্বী যা ক্রমের দ্বারা)। তাই আত্মজ পুত্রাপেক্ষায় পরজাত পুত্র, তাহার অপেক্ষায় লব্ধ পুত্র, তাহার অপেক্ষা যাদৃচ্ছিক ভাবে প্রাপ্ত পুত্র গৌণ।।

ধনাধিকার বিষয়ে বলা হইয়াছে অপবিদ্ধ পর্যন্ত পূর্বোক্ত ছয়জন পুত্র ক্রমশঃ বন্ধু, জ্ঞাতি (এবং) পৈতৃকধনের এবং বন্ধুদের ধনেও তৃতীয়াংশভাগী হয়।

## 35. मूलम्

**(19A) बन्धुधनस्यापि त्र्यंशहराः। एतदेव स्पष्टयति तेषां सवर्णा इत्यादिना। असत्यौरसे सर्व्वहरा इत्यर्थात् सिद्धम्। अन्ये तूत्तरोक्ताः सत्यौरसे पितुर्दायादेवत्र्यंशहरा न तु सपिण्डादिधनानामित्यर्थादेवकाराच्च लभ्यते। औरसे पुनरुत्पन्ने ते तृतीयांशभागिनः इति कात्यायनै[45] क्यात्। असत्यौरसेऽपि उत्तराः षट् (? उत्तरे षट्) पितुरेव सर्वदायहरा इति पर्यवस्यति। तदेवं मुनीनां मतवैधर्म्यात् समाधीयते। मनु-बौधायन-कालिकापुराण-याज्ञवल्क्यात्रिव्यासादिभिर्यत् दत्तकस्य पूर्व्वषट्कमध्ये पठित (पाठः) स्तत् सर्व्वकालसाधारणः। नारद-देवलादि वचनन्तु कलीतरपरम्। तथाहि पुराणादि धर्म्मस्य कलिमुद्दिश्यैव व्यासेनोक्तत्वाद्द्वापरान्ते। मनोश्च वेदार्थोपनिवद्धत्वात् प्राधान्यं**

**दीप्तिः**

(19a) सजातीय विजातीय पुत्राणां पितृधनाधिकारनिरूपणप्रसङ्गे वहूनां मुनीनां वचनानि उद्धृतानि। तत्र मतविप्रतिपत्तौ समादधाति निबन्धकारः। मन्वादिवचनं सर्वकालसाधारणम्। नारददेवलादीनां भिन्नमतं कलीतरपरम्। उद्धृतकात्यायनवचनस्य पाठभेदो दृष्टः। कात्यायनस्मृतिसारोद्धारसङ्कलकेन महामहोपाध्याय पाण्डुरङ्ग काणे महोदयेन वयं विज्ञापिताः (उक्त श्लोकस्य टिप्पनी मध्ये p. 302) यत् कल्पतरौ विवादचिन्तामणौ अपि तृतीयांशाहरत्वं दत्तकपुत्राणां स्वीकृतम्। वङ्गदेशे दत्तकपुत्राणां तृतीयांशहरत्वं, वाराणस्यां पुनः चतुर्थांशहरत्वम्। कौटिलीये अर्थशास्त्रे धर्मस्थीयाख्ये

---

45. दायभागधृतं कात्यायनवचनम् ईदृक्- उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः। सवर्णा असवर्णास्तु ग्रासाच्छदनमागिनः। (दायभागः-पृः 148 दशमाध्याये), P.V. Kane महोदय सङ्कलिते कात्यायनस्मृतिसारोद्धारे—पुनः—उतपन्नेचौरसे पुत्रे चतुर्थांशहराः सुताः। सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः॥ (कात्यायनस्मृति सारोद्धार by P.V. Kane—V. 10 857) दत्तकचन्द्रिकाधृत कात्यायनवचने– ".... तृतीयांशहराः स्मृताः।" .... इत्येवपाठः। ततः "चतुर्थांशहराः स्मृताः इति द्वितीयचरणे क्वचित पाठः"। (दत्तकचन्द्रिका- पृः 29)। एवं अक्ष्मीधरीय कल्पतरौ– (कल्पतरुव्यवहार नाम कात्यायनवचने पुनः उत्पन्ने त्वौरसेपुत्रे तृतीयांशहरा स्मृताः p. 710। विवादरत्नाकरेहपि (p548) तृतीयांशभागित्वं । तस्मिंश्चेत् प्रतिगृहीते औरस उत्पद्यते स चतुर्थ भागभागी स्यात् मैथिलवाचस्पतिमिश्रकृतविवादचिन्तामणौ दायविभागप्रकरणे, पृः 234 (विवादचिन्तामणि, edn. Venkateswar Press Bombay, 1820, Ś.8.) अपि तृतीयांशहराः "इत्येव पाठो लभ्यते"।

तृतीये अधिकरणे सप्तमे अध्याये द्वादशविधाः पुत्राः आलोचिताः। तत्रापि तृतीयांशभागित्वम् एव स्वीकृतम्। यथा– "औरसे तूत्पन्ने सवर्णास्तृतीयांशहराः। असवर्णा ग्रासाच्छादनभागिनः" (अर्थशास्त्रम् III. 7.)। "गौतमधर्मसूत्रे (28.32) पठितं सामान्यरूपेण--"चतुर्थांशिन औरसाद्यभावे"। अत्र हरदत्त-कृतायां मिताक्षराटीकायामुक्तं-"अथवा नैते कानीनादयो न रिक्थभाजः किन्तु चतुर्थांशिनः। पितृधनस्य चतुर्थांशं भजेरन्। पूर्व्वोक्तानां षण्णामौरसादीनाम् अभावे"। बौधायनधर्मसूत्रे (2.2.11) पुनः "औरसे तूत्पन्ने सवर्णास्तृतीयांशस्य हराः"॥ fol. 21b पृष्ठायाम् उद्धृतात् बौधायनगृह्यशेषात् (2.6.4)– यद्येवं त्वौरस उत्पद्यते तुरीयभाग् एव भवति...."चतुर्थांशभागित्वमायाति। मन्ये सुप्राचीनकालादेवारभ्य एतद्विषये मतद्वयं प्रचक्रमे॥ आस्ताम्–अधुना द्रष्टव्यं भवदेवादर्वाग्जातेन पारिभद्रीयजीमूतवाहनेन स्वकीये दायभागे किं कृतम्। यथा– "औरसेन तु क्षेत्रजादीनां विभागे ये पितृसवर्णा औरसपुत्राश्चोत्तम (स) वर्णाः पुत्रिकापुत्र–क्षेत्रज-काणीन-गूढ़जापविद्धसहोढ़ज पौनर्भव दत्तक-स्वयमुपागतकृतक-क्रीताः पुत्राः ते औरसपुत्रभागस्य तृतीयांशभागिनः। तदाह द्वादशपुत्रानभिधाय देवलः–।" "तदनु देवलवचनोद्धारानन्तरम्– औरसादयः षट् न केवलं पितृदायहराः किन्तु वन्धूनामपि सपिण्डादीनां दायहराः, अन्ये परभूताः पितुरेव परं दायहराः न सपिण्डादीनाम्॥ इत्यादि (दायभागः पृः- 146-147, दशमाध्याये)। दत्तकचन्द्रिकायामपि एतत्परमेव सिद्धान्तं पश्यामः। तस्य सारस्तु अयम्-दत्तकग्रहणानन्तरं औरसो जायते चेत् गुणवान् दत्तकः तृतीयांशं निर्गुणदत्तकः चतुर्थांशम् औरसधनास्य भजेत वशिष्ठानुसारम्। दत्तको यथा पितामहधने तथा मातामहधनेऽप्यधिकारी। तत्र वहुमुनिवचनेषु यद्यपि दत्तकस्य पूर्वषट्कमध्ये न परिगणनं दृश्यते तथापि स्मृतिषु मनोः प्राधान्यात्। मनुवचने च दत्तकस्य पूर्वषट्कमध्ये परिगणनात् निबन्धारः एवं निर्णीतवन्तः। दत्तकः सगोत्रबन्धोः धनं प्राप्नुयात् किन्तु भिन्नगोत्रबन्धोः मातामहस्य धने नासौ अधिकारी। धर्माधिकरणेषु अपि अयमेव निर्णयः प्रचलति स्म यत्–यत्र मुनिना दत्तको बन्धुदायादरूपेण न परिगणितः – तत्र मुनिवाक्ये असौ बन्धुः असगोत्रबन्धुः अर्थात् मातामहादिबन्धुरित्यवगन्तव्यः। यत्र च बन्धुदायादरूपेण गृहीतो दत्तकस्तत्र बन्धुपदेन पितामहभ्रात्रादीनां ग्रहणम्। तत्र प्रमाणं मानवीयनवमाध्यायस्थ-158 संख्यकश्लोकस्य व्याख्यानम्। पितृधने वा पितामहधने वा दत्तकपुत्रो वा पौत्रो वा प्रपौत्रो वा स्वकीयं योग्यांशम् अर्थात् तृतीयांशं चतुर्थांशं वा भजेत–। दत्तकचन्द्रिका (पृः 27-31)॥ हन्त! अधुना नैषा व्यवस्था प्रचलति। सार्वभौमभारतराष्ट्रविधायकमण्डल्यां गृहीतेन विधानेन सर्वास्ता अपसारिता इत्यलं विस्तरेण।

(19a) That is clarified here (by the words) : the *savarṇas* among then etc. when there is no *aurasa* son (these sons) inherits the entire property—this is settled from the meaning itself. The other (types of sons) enumerated is the latter group, when there is an *aurasa* son, get one third of the paternal wealth only and nothing of the property of the cognates. This is clear from the import and from the use of the word '*eva*' (emphatic) (in the above quotation from Devala). (And) this is in omission with (the words of) Kātyāyana—"when an *aurasa* son is born they inherit (only) one third of the property". (So) the conclusion is that in the absence of an *aurasa* son, the sons belonging to the latter category inherit the entire property of the father only.

Thus the difference of opinion among the sages is reconciled in this way : What has been told in Manu, Baudhāyana, Kālikāpurāṇa, Yājñavalkya, Atri, Vyāsa and other works to the effect that a Dattaka son is to be counted in the first category/group of six sons, holds good in all the *yugas* (ages). The view of Nārada, Devala[46] and others is tenable in ages other than the Kaliyuga. For Vyāsadeva, at the end of the Dvāparayuga, narrated the Puranic religion, hinting at the Kaliyuga only. So far as Manu is concerned : Manu's pre-eminence is assured since he has recorded only Vedic customs and usages. "Whatever goes against the findings of Manu is not a commendable smṛti", from this statement of Bṛhaspati and

(19a) ইহাই স্পষ্ট করিয়া বলিতেছেন—"তাহাদের মধ্যে যাহারা সবর্ণ"—ইত্যাদি বাক্যের দ্বারা। "ঔরসপুত্র না থাকিলে সমগ্র ধনের অধিকারী হয়"—ইহা অর্থ হইতে জানা যায়। অবশিষ্ট অর্থাৎ পরবর্ত্তী ছয়পুত্র ঔরসপুত্র থাকিলে পিতার সম্পত্তি হইতে (কেবলমাত্র) তৃতীয়াংশভাগী হয়। "সপিণ্ডদের ধন হইতে নয়"—এইটি অর্থ হইতে ও 'এব' এই শব্দের প্রয়োগ হইতে পাওয়া যায়। "ঔরস পুত্রজাত হইলে তাহারা তৃতীয়াংশভাগী হয়" এই কাত্যায়নবচনের সহিতও (এই ব্যাখ্যার)

46. Jīmūtavāhana concludes thus : *manuvacane* (9/163 *eka evaurasaḥ putraḥ* etc.) *Śeṣapadaṃ* Kātyāyanavacane (as quoted in fn. 45 ante) *cāsavarṇapadaṃ hīnavarṇaparaṃ, devahenaikavākyatāt* (Dāyabhāga, p. 148).

মিল পাওয়া যায়। ঔরসপুত্র না থাকিলে পরবর্ত্তী ছয়পুত্র পিতারই সকল সম্পদের অধিকারী হয়—এই অর্থ শেষ পর্যন্ত আসে।

তাই মুনিদের মধ্যে এই মতবৈষম্যের এইরূপ সমাধান করা যাইতেছে—মনু-বৌধায়ন কালিকাপুরাণ যাজ্ঞবল্ক্য অত্রি ব্যাস প্রভৃতিরা দত্তক পুত্রকে যে প্রথম ছয়জনের মধ্যে গণন করেন তাহা সর্ব্বকাল সাধারণ। অর্থাৎ সকল যুগেই গ্রাহ্য। নারদ, দেবল প্রভৃতির বচন কলি ভিন্ন অন্যযুগে গ্রাহ্য। এই জন্যই দ্বাপর যুগের শেষে কলিযুগকে লক্ষ্য করিয়া ব্যাসদেব পুরাণাদিবিহিত ধর্মকে প্রচার করিয়াছিলেন। মনুর বিষয়ে=বৈদিক আচার ব্যবহারাদি স্বগ্রন্থে নিবদ্ধকরার জন্য মনুরচিত স্মৃতিগ্রন্থের অন্যসকল স্মৃতি অপেক্ষা প্রাধান্য অবশ্য স্বীকার্য। মনুর মতের বিপরীত মতপূর্ণ স্মৃতিগ্রন্থ প্রশংসনীয় নয় .....

## 36. मूलम्

**(19B) हि मनोः स्मृतेषु। मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते इति बृहस्पति वचनात्[47] मनुर्वैयत् किञ्चिदवदत् तद्भेषजं भेषजताया[48] इति भाष्याच्च मनुवाक्यादेव व्यवस्था। वन्धुधनाधिकारे मनुनैव द्वादशविधपुत्रानभिधाय "वहवश्चेत्तु सदृशाः पुत्रा रिक्थहराः पितुः" (मनु 9.184 ed.)। "पिताहरेदपुत्रस्य रिकथं भ्रातरएव वा" (ibid. 9. 185 ed.), त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषा पञ्चमो नोपपद्यते (ibid. 9.186)—अत्र औरसादीन् उपक्रम्य वहव इत्यादि यदि समानरूपाः पौनर्भवादयो वहवः पुत्राः पितृरिक्थहरा भवन्ति इत्यनेनोच्यते औरसाद्यन्तु एक एवौरसः पुत्र इत्यनेन सिद्धत्वात् अविद्यमानौरसपुत्रस्य पत्नीदुहितृरहितस्य पिता धनं गृह्णीयात् तेषामभवे भ्रातरो गृह्णीयुः। इदानीं क्षेत्रजा–**

---

47. वेदार्थप्रतिवद्धत्वात् प्रामाण्यं तु मनोः स्मृतम्। मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते॥–(वृहस्पतिस्मृतिः (संस्कारकाण्डम् v. 13.)

48. (i) यद्वै किञ्च मनुरवदत् तद् भेषजम् —II. 'तैत्तरीय संहिता II. 2.10.2.
(ii) मनुर्वै यत्किञ्चावदत् तन्द्भेषजं भेषजातायै–''ताण्ड्यब्राह्मण 23.16.7-अत्रभाष्यम् रागद्वेषादिशोकापनोदकस्य मनोः परानुग्रहार्थं स यत् किञ्चमपि धर्मविषयं वाक्यमवदत् तन्द्भेषजं हितम्। अर्थ यस्तदीयधर्मं सामिधेणीकरणं भेषतायै सकलदोषस्य औषधाय भवति॥

दीप्तिः

(19b) मनुवचनानां प्राधान्यं सर्वथा स्वीकार्यं तस्य वेदार्थोपनिवद्धत्वात् इति।। मनुर्वै यत् किञ्चिद् इत्यादि तैत्तिरीय संहितायां ताण्डयमहाब्राह्मणे चे श्रुयते-तस्य श्रुतिवाक्यस्य भाष्यरूपेणापि यत् कथितमिति--भाष्याद्य इति।।

पुत्राणां धनभागित्वविषये मनुना व्यवस्थितं यत्र सर्ववर्णजाताः पुत्रा वर्त्तन्ते ब्राह्मणस्य, तत्र ब्राह्मणीपुत्रः त्र्यंशम्, क्षत्रियापुत्रोऽ शंद्वयम्, वैश्यापुत्रः सार्द्धैकांशं शूद्रापुत्रश्च अंशमात्रं हरेत्। यत्र सर्ववर्णानाम् एकैकपुत्रसद्भावस्तत्रेयं व्यवस्था। यत्रैको ब्राह्मणीपुत्रः अपरश्च क्षत्रियासुतः तत्र सर्वधनस्य भागपञ्चकं विधाय ब्राह्मण्यां जातस्य भागत्रयं क्षत्रियायां जातस्य भागद्वयम्। अथवा सर्ववर्णसमाहारे सर्वं रिकथं दशधा परिकल्प्य भागचतुष्टयभागत्रितय-भागद्वितय भागैकं-यथाक्रमं ब्राह्मण क्षत्रियवैश्य-शुद्रजातानां कल्पयेत्। अत्र किञ्चिद्गुणवत्वेन विभागप्रकारद्वयम् इति जीमुतवाहनः। अथवा परपरापेक्षया पूर्व पूर्वस्य श्रेष्ठत्वात् इयं व्यवस्था। श्रेष्ठत्वस्य फलमियत् यत् क्षेत्रज-गुणवद्दत्तकं व्यतिरिच्य सति पूर्वपुत्रे परपुत्रो न धनाधिकारी। पूर्वपुत्रः सर्वस्य धनस्य भागीभूत्वा अन्यान् ग्रासाच्छादनेन विभृयात्। तत्र शूद्रापुत्रस्य औरसत्वसद्भावेऽपि क्षेत्रजादिपुत्रसत्तायां तस्य न पितृधनेऽधिकारः। यदि तुल्यरूपाणां पौनर्भवादिपुत्राणां सद्भावस्तदा सर्वे तुल्यांशिनो भवेयुः-- इति कुल्लूकभट्टः। कस्यापि मुख्यामुख्यपुत्राभावे, पौत्रप्रपौत्राभावे पत्नीदुहित्रोरभावे तस्य पिता एव धनभागी-भवति, तस्याप्यभावे तादृशजनस्य भ्राता तद्धनमाप्नुयात् ।।

त्रयाणामुदकं कार्यम्--पितुः, पितामहस्य, प्रपितामहस्य च इति पुरुषत्रयस्य पिण्डतर्पणोदकादिदानं चतुर्थपुरुषेण सम्प्रदात्रा निष्पाद्यते। पिण्डोदकयोर्दाता चतुर्थः पुरुषः।--पञ्चमे पुरुषे अर्थात् प्रपौत्रपुत्र-- वृद्धप्रपितामहयोः सापिण्डय सम्बन्धेव नास्ति। तेन पौत्रप्रपौत्राणाम् अपुत्रपितामहादिधने अधिकारः प्रवर्त्तते।। व्यवस्थाविस्तरस्तु दायभागादौ अनुसन्धेयः।।

(19b) Whatever Manu has said is (wholesome as) medicine—from this statement in the (Veda) Bhāṣya (?) (recording Manu's pre-eminence) procedure is prescribed according to Manu's findings.

In the context of inheritance to property of the Bandhus (cognates or kinsmen), Manu himself after narrating twelve types of sons (has told) : If there be several sons of the same caste, then all of them receive (equal share) of the paternal

property (Manu. 9.184 ed). The property of a person having no son (grandson, great grandson, wife, daughter) goes to his father and in his absence to his brother (*Ibid.* 9.185 ed). Great grand father, grandfather and father—to these three (generations) *piṇḍa* and *udaka* are to be offered by the son representing the fourth generation. In this matter there is no fifth party (*Ibid.* 9.186). In such cases, beginning with the *aurasa* son..... "*bahavaḥ*....."etc. means : "if *paunarbhava* and other types of (secondary) sons all from the same caste as the father's be inheritors to the property of the father....". From this it is understood that "from the *aurasa* to the last type (of son)", because, "*aurasa* son on the other side....." by such statement itself the purpose is served. His wealth, who has no *aurasa* son, no wife, no daughter, goes to his father. In the absence of father, brother receives the wealth. Now—

(19b) এই বৃহস্পতিবচন হইতে এবং 'মনু যাহাই বলিয়াছেন তাহাই ঔষধসমূহের মধ্যে ঔষধ ইত্যাদি ভাষ্য (?) বচন হইতে (মনুর প্রাধান্য নিরূপণ করিয়া) মনুর বচন অনুযায়ী-ই ব্যবস্থা (করা হয়) (সপিণ্ডাদি) বন্ধুদের ধনের অধিকার নিরূপণ প্রসঙ্গে মনু স্বয়ং দ্বাদশবিধ পুত্রের কথা বলিয়া "যদি সবর্ণ বহুপুত্র থাকে তাহারা সকলেই ধনের (তুল্যাংশ) ভাগী হইবে (মনু, 9.184cd); (পৌত্র, প্রপৌত্র, পত্নী, দুহিতা এবং মুখ্য ও অমুখ্য) পুত্রহীন ব্যক্তির ধন তাহার পিতা পাইবেন ও তাহার অভাবে তাহার ভ্রাতা পাইবে (9.185cd)। প্রপিতামহ, পিতামহ ও পিতা এই তিনজনের (উদক ও) পিণ্ডদান করণীয়। চতুর্থজন পুত্র হইল পিণ্ডোদক দাতা। এ বিষয়ে পঞ্চমজন কেহ নাই (9.186) (ইত্যাদি বলিয়াছেন)। এইসবক্ষেত্রে ঔরসাদি উপক্রম বা আরম্ভ করিয়া 'বহবঃ' ইত্যাদিতে (বক্তব্য এই যে) যদি সমানরূপ বা সমান বর্ণ পৌনর্ভবাদি অনেক পুত্র পিতার ধনের অধিকারী হয়—। ইহার দ্বারা বোঝা যায় ঔরস হইতে আরম্ভ করিয়া শেষ (পুত্র) পর্যন্ত। (কারণ) একদিকে ঔরসপুত্র (এইরূপ) বচনের দ্বারাই কার্যসিদ্ধ হইয়া যায়। যাহার ঔরসপুত্র নাই পত্নী ও দুহিতা নাই তাহার ধন তাহার পিতা গ্রহণ করিবে। পিতার অভাবে ভ্রাতা গ্রহণ করিবে।

## 37. मूलम्

**(20A) (क्षेत्रजा) दीनामपुत्र पितामह बन्धुधने अधिकारं दर्शयितुमाह ''त्रयाणामित्यादि''। त्रयाणां पित्रादीनाम् उदकदानं कार्य्यं, त्रिभ्य एव च पिण्डा देयाः, अर्थात् क्षेत्रजादिभिः। चतुर्थश्च क्षेत्रजादिः पिण्डोदकयोर्दाता, पञ्चमस्यात्र सम्बन्धो नास्तीति। तस्माद्युक्तः अपुत्रपितामहादि बन्धुधने गौणपौत्राणामधिकारः।[49] न चैतदौरसपुत्रपौत्रादिविषयं वाच्यं तेषां ''पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते'' (मनु 9.137 ab) इत्यादिना पूर्व्वं धनभागित्वस्योक्तत्वात् पिष्टपेषणं स्यात् (।) क्षेत्रजादिप्रकरणे चैतदुक्तस्य वैयर्थ्यादिति ज्ञेयम् एवमेव तट्टीकाकृतः सर्व्वे। तस्मात्-मनुस्मृत्येकवाक्यतापन्न-वौधायन-कालिकापुराणादि[50] वचनादौरस-पुत्रपौत्रैस्तादृशपुत्रस्य विभागे बन्धु धनस्यापि तृतीयांशभागित्वमिति सिद्धम्।**

**दीप्तिः**

(20a) अत्र या व्यवस्था सा न अैरसपुत्रपौत्रादिविषयिणी। अैरसपुत्रपौत्रयोश्च पुत्रेण लोकान् जयति (M.9.137) इत्यनेनैव विहितत्वात्। एवमेव तट्टीकाकृतः। न जाने केते। मनुस्मृतेः यावन्तष्टीकाकारा अद्यत्वे ज्ञाताः तन्मध्ये भट्टमेधातिथिमतिरिच्यि अन्ये सर्वे भट्टभवदेवतः अर्वाचीनाः। किञ्च कुल्लूकभट्टकृतटीकायाः अस्मिन् प्रसङ्गे महत् हि शब्दसाम्यम्। तथाप्यसौ भवदेवस्य अस्मिन् विषये उत्तमर्णः इति कालविपर्ययभिया न वक्तुं शक्यते। अतो भवदेव एवासीत् उत्तमर्णः। किम्बासन् अन्ये प्राचीनतया टीकाकृतः येषां नामानि पुस्तकान्यपि अधुनालुप्तानि। तेषामेवोल्लेखः भवदेवेन कृतोऽत्र। स्मर्त्तव्यं यद् ''वेदोऽखिलो धर्ममूलम्–'' इत्यादि (मनु 2.6) श्लोकव्याख्याने मेधातिथिना विवरणकारनामकः कश्चन मनुव्याख्याता उद्धृतः।

**(20a) To establish the right, to inherit to the property of the son less grand father and other *Bandhus* (kinsmen), of the *Kṣetraja* and other types of (secondary) sons, (Manu) said: Of the three etc. *(trayāṇām ityādi), trayāṇāṃ pitrādīṇām*—of the three father etc. (ie. father, grand father and great grand**

---

49. अत्र कुल्लुकभट्टकृतमन्वर्थ मुक्तावल्या सह शब्दसाम्यं विशेषतो लक्षणीयम्।

50. बौधायनकालिकापुराणवचने इतः पूर्वं 17.a. पृष्ठायामुल्लिखिते।

father), libation of water is to be given to them, three *piṇḍas* (rice balls) should be given ie. by *Kṣetraja* and others. And the fourth one is really the *Kṣetraja*/ others — the giver of *piṇḍa* and *udaka* (water), there is no relationship with the fifth one and therefore it is proper that to the estate of the son less grand father and other kinsmen (even) — the secondary are heirs (ie. have right to inherit). It is not to be said that the passage is concerned with *aurasa* son, grandson and so on, (because) already in (Manu. 9.137) — "By son one conquers the heavenly regions, by grandson one acquires perpetuity in those regions etc." their right to property has been told and so it will be pressing what has already been pressed and (in that case) the statement made in the context of *Kṣetra* and other (secondary) sons will be futile, that also is to be noted. All the commentators of his (ie. Manu's) work hold the same view. Therefore, as per the statement of Baudhāyana and Kālikāpurāṇa etc. which is in sucition with Manu Smṛti, in the case of partition of ancestral property among aurasa son, grand sons and such (secondary) sons the latter's right to get one third of the property of the Bandhus (Kinsmen) is proved —

(20a) এখন, ক্ষেত্রজাদি পুত্রদের পুত্রহীন পিতামহ প্রভৃতি বন্ধুদের ধনে অধিকার প্রদর্শনের জন্য বলা হইয়াছে। ত্রয়াণামুদকং কার্যং (মনু 9.186) ইত্যাদি তিনপুরুষের, পিতা, পিতামহ ও প্রপিতামহের উদ্দেশে উদকদান করণীয়, এই তিনজনেরই পিণ্ডদানকরণীয় অর্থাৎ ক্ষেত্রজাদির দ্বারা করণীয়। চতুর্থজন হইল ক্ষেত্রজাদিপুত্র— যে পিণ্ডদান ও উদকদান করিবে। পঞ্চমজনের এখানে কোনও সম্বন্ধ নাই। তাই অপুত্রপিতামহাদি বন্ধুর ধনে গৌণপৌত্র (ক্ষেত্রজাদির) অধিকার ন্যায্যই (মনুস্মৃতির 9.186 শ্লোকের কুল্লুকভট্টকৃতটীকার সহিত এই অংশের যথেষ্ট সাদৃশ্য আছে)। ঔরস পুত্র পৌত্রাদি প্রসঙ্গে ইহা বলা হইয়াছে—এইরূপ বলা যাইবে না—কারণ তাহাদের (পুত্রেণ লোকান্ জয়তে ইত্যাদি 9.137 শ্লোকে) পুত্রের দ্বারা লোকে স্বর্গাদিলোক লাভ করে, পৌত্রের দ্বারা ঐ স্বর্গাদিলোকে চিরস্থায়িত্ব লাভ করে ও প্রপৌত্রের দ্বারা সূর্যলোক লাভ করে ইত্যাদি শ্লোকে ধনাধিকারিত্ব পূর্বেই বলা হইয়াছে বলিয়া (এখানেও তাহা বলা হইতেছে বলিলে) পিষ্টপেষণ (চর্বিত চর্বণ) দোষ হইবে এবং ক্ষেত্রজপুত্রদের প্রসঙ্গে তাহা (প্রক্রমভঙ্গ বশতঃ) ব্যর্থ হইয়া যাইবে। এইরূপ মতই মনুস্মৃতির সকল টীকাকারদের ইহা জ্ঞেয়। তাই মনুস্মৃতির সহিত একবাক্যতাযুক্ত

বৌধায়ণ ধর্মসূত্র, কালিকাপুরাণ প্রভৃতির বচন দ্বারা ঔরসপুত্র পৌত্রের সহিত তাদৃশ (=ক্ষেত্রজাদি) পুত্রের ধনবিভাগকালে (তাহাদের) বন্ধুধনের ও তৃতীয়াংশভাগিত্ব সিদ্ধ হইল—

## 38. मूलम्

(20B) असति प्रपौत्रपर्यन्ते सर्वधनभागित्वमिति सुसिद्धम्। नन्विदं वार्हस्पत्य (वार्हस्पत्यं) मनु प्राधान्यख्यापकं हेतुवन्निगदेन सूचितं तत् किमन्यस्मृतीनां वेदार्थानुभवं विनैव स्वकपोलरचितत्वमुत नेति। इष्टापत्तौ च या वेदवाह्याः स्मृतयोः (यः) याश्च कुदृष्टयः[51] स्मृताः। सर्व्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः (Manu XII. 95) इत्यादि मन्वादिवचने वेदवाह्या चार्वाकाद्यनुगता चैत्यवन्दना-दिना (--वेदवाह्यचार्वाकाद्यनुगतचैत्यवन्दनादिना) स्वर्गोभवतीत्यतत्रवापास्ताः[52] प्रेत्य परलोके नरकावहा इत्यर्थः। एवञ्च स्मृतीनां वेदार्थानुभवजन्यत्वं स्मृतीनां[53] व्याहन्येत। अत्रोच्यते उपनिवद्धत्वादित्यनेनैव समाधानमलं परिश्रमेण इति। तथाहि उपसमीपस्थितेन...(? अर्थान्मी-नावतारस्य)[54] मनुना तन्मुखश्रुत वेदार्थस्य सङ्कलनया निवद्धत्वात् प्रतिबद्धत्वात्।

दीप्तिः

(20b) विषयान्तरमवतारयति। मन्वादिवचनेन चार्वाकाद्यनुगतवेदवाह्यचैत्य-वन्दनादिना स्वर्गोभवति इत्यादिकमपास्तम्। याः स्मृतयः वेदमूला न भवन्ति दृष्टार्थवाक्यानि, चैत्यवन्दनात् स्वर्गो भवति इत्यादिमूलकानि, यानि च असत्तर्कमूलकानि देवतापूर्वादिनिराकरणात्मकानि वेदविरुद्धानि चार्वाकदर्शनानि सर्वाणि परलोके यस्मान्नरक फलकानि तानि मन्वादिभिः गर्हितानि स्मृतानि इति

51. V.L. या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥ इति मेधातिथिकुल्लुकधृत पाठः

52. अत्रापिकुल्लुकवचनं संवदति। चैत्यवन्दनादिना--अत्र आदिना भस्मगुन्ठनं नरकपाल धारणमित्यादिकं ज्ञेयं तच्च टीकायां विस्तृतम्।

53. पदमिदं त्यक्तुं शक्यम्-अधिकत्वात्।

54. अविस्पष्टस्य पाण्डुलिपिमध्यस्थैतदंशस्य "विष्णोर्मीनावतारस्य" इत्यपि पाठो भवितुं शक्नोति-Here is a reference to the story of the great deluge when Manu and his followers were saved by a great fish and the story is narrated in the मनुमत्स्यकथा of the Yajurveda *(Śatapatha Brāhmaṇas)* in the *Mahābhārata* & in the *Matsyapurāṇa*.

कुल्लूकानुसारी पन्थाः। भट्टमेधातिथिस्तु वेदवाह्येषु सम्प्रदायेषु भस्मगुन्ठनं नरकपालधारणमपि धर्मत्वेन स्वीकृतम् । स तु न वैदिको धर्मः (मनु 2.1)। संसारमोचकनामकाः केचन प्राणिहिंसामपि धर्मं वदन्ति। एषा तु प्रत्यक्षवेदवाक्य निषिद्धा (2.6)। वेदवाह्याः श्रुतयः वेदविरुद्धाः ग्रन्थसन्दर्भाः, तेषु निबद्धानि वचनानि यथा चैत्यवन्दनेन स्वर्गो भवतीति उपदेश मूलकानि। ते च उपदेशा शाक्यनिर्ग्रन्थादि सम्प्रदाय सिद्धान्तत्वेन प्रसिद्धाः। कुदृष्टयः कुदर्शनाः असत् तर्कमूलकाः यथा वेदस्य रचयिता कश्चिदस्ति इत्यनुमानम्। अपूर्वं नास्ति देवता नास्ति इत्यादि वेदपौरुषेयत्व प्रमापकाणि शास्त्राणि।। (12.95) मीनावतारस्य इति–प्रलयपयोधिजलाद् वेदानुद्धृतवान् मत्स्यरूपधारी नारायणः इति सुप्रसिद्धम्। तस्मादेव वेदात्–

(20b) In the absence of male issue upto the level of great grandson, they become inheritors to the entire property (and not one third only) this is well established. Well ! Does this statement, like one *hetu-vat nigada* (roughly—like an *arthavāda* statement), of Bṛhaspati, proclaiming Manu's pre-eminence prove that other Smṛtis were composed (by their authors) as per their own imaginative power without any (first hand) experience of Vedic traditions ? As desired objection (objection but tending to produce desired effect –*iṣṭāpatti*) (one may quote) : "The Smṛtis that are outside the pale of Vedic religion, which are vitiated by bad vision— all prove futile after death, because they are grounded in *tamoguṇa*"—in this and such other statements of Manu etc.— (the purport is this :) "by worshipping *caityas* etc. which is outside the Vedic religion and which is accepted by the Cārvākas, life in heaven is assured/achieved—for this only they (ie. such Smṛtis) are rejected/*pretya* means in the next world—it results in residence in hell. Thus (if such Smṛtis be accepted as authoritative) the Vedic mooring of the Smṛtis will be set to naught (In other words the idea that the Smṛtis are written only on remembering and realising by heart the Vedic customs and usages will be nullified). Here it is told (thus)—By only the expression *upanibaddhatvāt* (on account of being incorporated) solution is arrived at there is no use of labour (on the meaning of other words). Because, upa ie. near at hand, by such Manu, listening from the mouth of the fish incarnation (of Viṣṇu), the Vedic customs etc. were compiled, codified—the same Vedic customs—in twelve

chapters in verses and made them public and hence his pre-eminence.

(20b) প্রপৌত্র পর্যন্ত পুংজাতকের অভাব হইলে, তাহারা সমস্ত সম্পত্তির অধিকারী (এক তৃতীয়াংশ নয়)—ইহা খুবই সুপ্রসিদ্ধ। এখন কথা হইল যে বৃহস্পতির এই জাতীয় মন্তব্য ( যেমন *হেতুবদ্ নিগদ* যাহা অর্থবাদের মত শোনায়) যাহা আচার্য মনুর প্রাধান্যকে অনুসরণ করে প্রমাণ করে যে অপর স্মৃতিগুলি বেদের অর্থ অনুভব না করে আপন কল্পনার দ্বারা কি রচিত হয় নি? এমন অভিলষিত আপত্তি ( যে আপত্তি ইষ্টমঙ্গল উৎপাদন করে) যে (একজন বলিতে যে) যাহা বেদবহির্ভূত স্মৃতি সেইগুলি কুদৃষ্টি সম্পন্ন। মৃত্যুর পর এই সকলই নিষ্ফল। ইহাতে এবং অন্য মনুবচনেতে (মনু ১২/৯৫) কথিত আছে যে চৈত্যবন্দনাদির দ্বারা যাহা বেদবহির্ভূত ধর্ম অথচ চার্বাকাদির দ্বারা স্বীকৃত ( যে) স্বর্গের জীবনসুখ আমাদের নিশ্চিত। এই জন্যই সেই জাতীয় (স্মৃতিগ্রন্থ) আমাদের ত্যজ্য। প্রেত্য শব্দের অর্থ পরলোক যাহা (আমাদেরকে) নরকে স্থান দেয়। ইহার পর যদি এই সমস্ত স্মৃতি প্রামাণ্য বলিয়া ধরা হয় তাহা হইলে বেদার্থ অনুভব জন্য স্মৃতিগুলি নিষ্ফল হউক। তখন বলা হইতেছে যে *উপনিবদ্ধত্বাৎ*—এই বাক্যের দ্বারা সমাধান করার কোন প্রয়োজন নাই। তাই বলা হয় যে উপ শব্দের অর্থ সান্নিধ্য। সেই জন্যই বলা হয় যে বিষ্ণুর মীন অবতার ভূত মনু তাঁহার মুখ হইতে শুনিয়া বেদার্থের সঙ্কলনের দ্বারা নিবদ্ধ হেতু দ্বাদশ অধ্যায়ে গ্রন্থ প্রণয়ন করায় মনুর প্রাধান্য অত্যন্ত অধিক।

## 39. মূলম্

**(21A) एतद्वेदार्थस्य द्वादशाध्यायैः पद्यरचनया प्रथितत्वादित्यर्थः। अन्यस्मृतीनान्तु ''इमं विवस्वते योगं प्रोक्तवानहमव्ययम्। विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्। एवं परम्पराप्राप्तयोगं राजर्षयो विदुः''॥ (भगवद्गीता, ज्ञानयोगः 4. 1-2 ab) इति भगवदुक्तश्च शिष्यपरम्परोपदेशाद्वेदार्थानु-भवजन्यत्वं श्रूयते। मनोस्तु साक्षादेवेति अन्यस्मृत्यपेक्षितं प्राधान्यमिति व्यक्तं मत्स्यपुराण मार्कण्डेयपुराणयोः प्रपञ्चभयान्नेह प्रपञ्चितम्। प्रकृतमनुसरामः। अथ ग्रहणपरिपाटी--॥ तत्र बौधायनः[55] अथ पुत्रपरिग्रहविधिः। पुत्रं**

55. बोधायन गृह्यशेषः (सं एल श्रीनिसाचार्यः, महीशूरात् 1904 खृष्टाब्दे प्रकाशितः) 2.6.4 (द्वितीय प्रश्ने षष्ठे अध्याये)--

**प्रतिग्रहीष्यन्नुपकल्पयति द्वे वाससी द्वे कुण्डले अंगुरीयकं (च) आचार्य्यञ्च वेदपारगं कुशमयं वर्हिः पर्णमयमिध्म (म्) इत्यथ बन्धूनाहूय-**

**दीप्ति**

(21a) आचार व्यवहार प्रायश्चित्तमूलकानाम् अर्थानां द्वादशभिरध्यायैः सङ्कलनं कृतम् इति। मीमांसा सूत्रेष्वपि स्मृतिप्रामाण्याधिकरणे (मी. सु. I. 3.1-2) धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्। अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्। इति सुत्रद्वयेन स्मृतीनां प्रामाण्यं प्रतिपादितम्। मनोश्च भिषकृतुल्यत्वं वेदवचनेनैव प्रतिपादितम्। स्मृत्यन्तराणां--श्रीभद्मगवद्गीताप्रभृतीनां शिष्यपरम्परया वेदार्थस्यैव सम्प्रसारकत्वात् प्रामाण्यंमुररीकर्तव्यम्। मनोस्तु प्राथम्यं सर्वैरेव स्वीकृतमित्यलं पल्लवितेन।

अधुना दत्तकग्रहण परिपाटी उपस्थाप्यते। बौधायनगृह्यसूत्रानुसारम्--बन्धून्-आत्मपितृमातृबन्धून्। बन्धुः स्वस्वजनाः समाः इत्यनेन ज्ञातिशब्दस्य बोधनादपि अत्र पारिभाषिकवन्धूनामेव ग्रहणम्। वर्हिः समित् पालाशं वा खादिरं वा अर्कः पलाशः खादिरः अपामार्गोऽथपिप्पलः। उडुम्बरशमीदूर्वाकुशाश्च समिधः क्रमात् इति पारस्करीये। बान्धवाह्वानं दृष्टार्थं राजाह्वानबत् वध्नन्ति जानन्ति आत्मीयतया परिगृहीतं दत्तकपुत्रम् दत्तकमीमांसायाम्--एवमाह! तत्र वन्धून् आहूतान् ब्राह्मणांश्च अन्नेन सम्भोज्य स्वगृह्योक्तं कर्म यथावत् सम्पाद्यम्।

(21a) Regarding other Smṛtis : "Oh sinless (pure) one ! I have narrated this everlasting Jñānayoga to Vivasvat (sun), Vivasvat told it Manu and Manu to (king) Ikṣvāku. Thus this science, the saint by monarchs received succesively."

This saying of the lord, given to instruct the success of students, evolved out of realisation of Vedic customs and usages—it is so heard. In the case of Manu, however, this (receipt of instruction) was direct and therefore his the relative superiority of Manu Smṛti to other works and this has been clearly narrated in the *Matsyapurāṇa* to the Mārkaṇḍeyapurāṇa and for fear of (excessive) digression that is not elucidated here. We will now follow the contextual matter. Now (is discussed) the procedure (of the ritual) of adoption. On that matter Baudhāyana says : "Now the procedure of taking a son in adoption (is being discussed) :

**A man about to adopt a son procures two pieces of cloth, two earring, ring (for finger), an Ācārya well versed in the Vedas, an āsana of Kuśa grass and sacrificial fuel and then assembling the relatives inside the house—**

(21a) অন্যস্মৃতির বিষয়ে ঃ—হে পাপহীন (অর্জুন), বিবস্বান্ সূর্যকে এই অব্যয় জ্ঞানযোগ আমি বলিয়াছিলাম। বিবস্বান্ মনুকে বলিয়াছিলেন, মনু রাজা ইক্ষাকুকে বলিয়াছিলেন। এই ভাবে পরম্পরাগতভাবে প্রাপ্ত যোগশাস্ত্রকে রাজর্ষিরা জানিয়াছিলেন। শিষ্য পরম্পরাকে উপদেশদানহেতু এই যে ভগবদুক্তি তাহা বৈদিক আচরণাদির অনুভব হইতে জাত বলিয়া শোনা যায়। মনুর ক্ষেত্রে এই বেদার্থানুভবটি সাক্ষাৎ বা প্রত্যক্ষ তাহাতে অন্য স্মৃতির তুলনায় মনু স্মৃতির প্রামাণ্য অধিক ইহা সুস্পষ্ট ভাবে মৎস্য পুরাণ ও মার্কণ্ডেয় পুরাণে বর্ণিত। অধিক বিস্তৃতির ভয়ে তাহা এখানে বিশদ বলা হইল না। (এখন) প্রাসঙ্গিক বিষয়ের অনুসরণ করিব। ইহার পর দত্তকপুত্র গ্রহণের পরিপাটী=সে বিষয়ে বৌধায়ন (বলেন)—অনন্তর (দত্তক) পুত্রগ্রহণের বিধি। পুত্রকে গ্রহণ করার ইচ্ছায়—"দুইটি বস্ত্র দুইটি কর্ণকুণ্ডল, অঙ্গুরীয়ক, বেদজ্ঞ আচার্য, কুশময় আসন, পর্ণময় দাহনোপযোগী যজ্ঞিয় কাষ্ঠ সংগ্রহ করিয়া সপিণ্ডবন্ধুদের আবাহন করিয়া—

## 40. मूलम्

**(21B) निवेशनस्य मध्ये राजनि निवेद्य परिषदि वागारमध्ये ब्राह्मणानुपवेश्य पुण्याहं स्वस्ति ऋद्धि इति वाचयित्वा यद्देवयजनोल्लेखप्रभृति आप्रणीताभ्यः कृत्वा दातुश्च समक्षं गत्वा मे पुत्रं देहीति भिक्षेत। ददानीतीतर आह। तं परिगृह्णाति--धर्म्मायत्वा परिगृह्णामि सन्तत्यै त्वा परिगृह्णामि। अथैनं वस्त्र कुण्डला-दिभिरलङ्कृत्य परिदधानः प्रत्यग्निमुखं कृत्वा पत्न्या जुहोति। यस्त्वा हृदा कीरिणा[56] मन्यमानः इति पुरोनुवाकमनूद्य यस्यैवं सुकृते जातवेद[56a] इति याज्यया जुहोत्यथ व्याहृतीर्हूत्वा स्विष्टकृतं प्रभृति सिद्धामाधेनुवरप्रदानदक्षिणां**

---

56 यस्त्वा हृदा कीरिणामन्यमानोऽमर्त्यं मर्त्यो जोहवीमि।
जातवेदो यशोऽस्मासुधेहि प्रजाभिरग्ने अमृतत्वमश्याम् R.V. 5.4.10, T.S.I. 4.46.

56a यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणवः स्योनम्।
अश्विनं स पुत्रिणं वीरवन्तं गोमन्तं रयिं नशतेस्वस्ति॥ R.V. 5.4.11. T.S.I. 4-46
for other references see Bloomfield's *Vedic Concordance*.

**ददाति--एते च वाससी एते च कुण्डले एत तूद्याङ्गुरीयकं (।) यद्येवं त्वौरसमुत्पद्यते (अैरस उतपद्यते) स तुरीय भागे सम्भवति (तुरीयभाक् एष भवति)[56b]**

**दीप्तिः**

(21b) आप्रणीताभ्यः इति प्रणीता घृतपात्रम्, कृत्वा इति शेषः। इतरः दाता। अलंकृत्येति वालकमिति शेषः। अग्निमुखं वालमग्निमुखं कृत्वेत्यर्थः। पक्त्वा चरुमिति शेषः। पुरोनुवाक्यया, याज्यया सामिधेन्या ऋचा इत्यर्थः। तत्र हविषः पात्राद् ग्रहणावसरे पठ्यमानो मन्त्रः पुरोनुवाक्या, हविषः वह्नौ प्रदानावसरे पठ्यमाना ऋक् याज्या अग्निसमिन्धनावसरे पट्यमाना च सामिधेनी इति याज्ञिकाः। स्विष्टकृत् होमविशेषः। याज्ञिकास्तु आधानकर्मसमाप्त्यङ्गककर्मविशेषः सु इष्टं यागं करोति यःसः इति व्युत्पत्तिलभ्यार्थः। आधेनुवरेति। धेनुः शंखस्तथानड्वान् हेम वासो हयः क्रमात्। कृष्णा गौरायसश्छाग एतावै दक्षिणाः स्मृताः इति वचनात्। ददातीति दद्यादित्यर्थः यो दत्तक एवमुक्तक्रमेण गृहीतः। तु शब्दो भिन्नक्रमे पश्चादौरसः पुत्र उतपद्यते चेत् तदा दत्तकश्चतुर्थभागभागी स्यादित्यर्थः। सम्भवति (दत्तकमीमांसाधृत पाठे) स इति शेषः इति दत्तकमीमांसा व्याख्यायां मम भरत शिरोमणयः।।

(21b) narrating everything to the king (in his absence to the village landlord) in an assembly of people or within the house—he (the adoptive father) will arrange the seat of the brahmins (ie. cause them to be seated), make them utter the formulas (connected with) *puṇyāha, svasti* and *ṛddhi* and

---

56b दत्तकमीमांसा-73 पृष्ठायाम्। दत्तकचन्द्रिकायाम-12 पृष्ठायाम्। तैत्तिरोयाणमियमेव व्यवस्था। अतस्तेषु तेषु निवन्धेषु उद्धृता। किन्तु वहुषु स्थलेषु मुद्राकरप्रमादः दृष्टिं विक्लवयति अतो बौधायनगृहयशेषत् प्रासंगिकांशस्य अयमुद्धारः--
अथ बन्धूनाहूय गृहमध्ये राजनिचावेद्य परिषदि वागारमध्ये ब्राह्मणानन्नेन परिविश्य पुण्याहं स्वस्त्यृद्धिम्- इति वाचयित्वा देवयजन...प्रभृत्या प्रणीताभ्यः कृत्वा दातुः समक्षंगत्वा....धर्मायत्वा गृह्णामि सन्तत्यै गृह्णामि इति। अथैनं वस्त्रकुण्डलाभ्यामङ्गुरीयकेण चालङ्कृत्यं परिधान प्रभृत्यग्निमुखं कृत्वा पक्वाज्जुहोति- "यस्त्वा हृदा कीरिणा मन्यमानः" इति पुरोनुवाक्यामनुच्य "यस्मै त्वं सुकृते जातवेदः" इति याज्यया जुहोति। अथ व्याहृतीर्हुत्वा स्विष्टकृत् प्रभृति सिद्धमाधेनुवर प्रदानात्। अथ दक्षिणां ददात्येते एव वाससी एते च कुण्डले एतद्याङ्गुलीयकम्। यद्येवं कृते औरसः पुत्र उत्पद्यते तुरीयभागेष भवतीति स्माह भगवान् बोधायनः।।

after the preparation, by digging, of the ritual ground (and) of works connected with *praṇita* (butter oil bowl) should go before the giver and beg of him (saying) "give me the son". The giver (other) will say "I give hereby". Then the adoptive father receiving the boy will say—"I receive you for Dharma, I receive you (for continuity of my family) as a child"—this and then decorating him with the ornaments (earrings, finger ring etc.) and clothing him and placing him facing the sacrificial fire cook the '*caru*' (rice soup with milk, honey etc.) and with it offer oblation chanting the mantra *yastvā hṛdā kīriṇā manyamānaḥ* etc. as the *puronuvākyā mantra* (the Vedic mantra uttered at the time of receiving the offering from the bowl) *yasmai tvaṃ sukṛte jāta vedaḥ* etc. as the *yājyā mantra* (the *mantra* uttered at the time of throwing of offering on the fire) then he should perform the Vyāhṛti homas the Sviṣṭakṛt rite and make gift of an well-bred milch cow as sacrificial fee and also this, pair of cloths, of earrings and ring (also are given as fee). If an aurasa son is born after this adoption, the adopted son becomes eligible to receive only one fourth of the adoptive father's property.

(21b) রাজাকে (অভাবে, গ্রামের ভূস্বামীকে) নিবেদন করিয়া, সভামধ্যে অথবা গৃহমধ্যে ব্রাহ্মণদের উপবেশন করাইয়া, পুণ্যাহ স্বস্তি ও ঋদ্ধিবাচন করাইয়া যজ্ঞস্থল নির্মাণ (দেবযজনোল্লেখ) হইতে ঘৃত পাত্র সম্পৃক্ত কার্য সমাপন করিয়া পুত্রদাতার সম্মুখে যাইয়া (গ্রহণকারী) প্রার্থনা করিবেন—'আমাকে পুত্র দিন'। অন্যজন অর্থাৎ দাতা বলিবেন 'দিলাম'। সেই পুত্রকে গ্রহণ করিয়া গ্রহীতা বলিবেন 'ধর্মের জন্য তোমাকে গ্রহণ করিলাম সন্ততি রক্ষার জন্য তোমাকে গ্রহণ করিলাম'। তাহার পর সেই বালককে বস্ত্র কুণ্ডলাদি দ্বারা অলঙ্কৃত করাইয়া বাসাদি পরিধানপূর্বক অগ্ন্যভিমুখী উপবিষ্ট করাইয়া চরুপাকপূর্বক হোম করিবেন। তাহাতে "যস্ত্বা হৃদা ক্ষীরিণা মন্যমানঃ। ইত্যাদি। পুরোনুবাক্যা (=হবিঃপাত্র হইতে হবিঃ গ্রহণকালে পঠনীয়) মন্ত্র পাঠ করিয়া যস্মৈ ত্বং সুনৃতে জাতবেদঃ ইত্যাদি যাজ্যা (অগ্নিতে হবিঃ প্রক্ষেপণকালে পঠনীয়) মন্ত্র পাঠ করিয়া হোম করিবেন। তাহার পর ব্যাহৃতি হোম করিয়া স্বিষ্টকৃৎ নামক যজ্ঞ ও একটি উত্তম ধেনু যজ্ঞকর্মের দক্ষিণারূপে প্রদান পর্যন্ত কর্মের (পরিধি বলিয়া) স্বীকৃত। এবং এই বস্ত্রযুগল, এই কুণ্ডলদ্বয়, এই অঙ্গুরীয়কও (দক্ষিণারূপে দেয়)। তাহার পরে যদি ঔরস পুত্র জন্ম গ্রহণ করে তখন এই দত্তকপুত্র (পিতৃধনের) চতুর্থাংশভাগী হইবে।

## 41. मूलम्

**(22A) इत्याह स्म-बौधायनः। एतच्च प्रायशः साग्निकर्तृविषयम्। अथेत्यादिनिरग्नि-कर्तृकग्रहणे बोध्यम्। साग्नेः पुत्रेष्टियागनान्तरं वक्ष्यमाणत्वान्निरग्नेर्महाव्याहृति होमानन्तरग्रहणविधानादित्युभयांगस्यात्र सद्भावात्। पुत्रेष्टिस्तु अथ पुत्रवते पुरोडाशमष्टाकपालम्, इन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरे-वास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छति इति प्रसिद्धा। आदौत्ययं (आदौत्वयं) यागः। गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमञ्चरेतदित्युक्तेः (ञ्चरेदित्युक्तेः) ग्रहणसङ्कल्पात् पूर्वम्। आह वशिष्ठो[57]ऽपि--''शुक्रशेणित सम्भवः पुत्रो मातापितृनिमित्तकस्तस्य दान विक्रयत्यागेषु मातापितरौ प्रभवतः।'' नैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा। स हि सन्तानाय--**

**दीप्तिः**

(22a) गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमञ्चरेदित्यादि कालिकापुराणवचनं वहुषु दत्तकविषयग्रन्थेषु दत्तकचन्द्रिकादत्तकनिर्णय-दत्तकदर्पण-दत्तककौमुदी प्रभृतिषु पुत्रेष्ट्याः आवश्यकत्वमवतारयति। दत्तकतिलकवद् दत्तकमीमांसाग्रंथेऽपि अस्य विचारः। आश्वलायनश्रौतसूत्रे (II. 10) पुत्रकामेष्ट्याम् अग्निः पुत्री-इत्यादिना तद्विमर्शः। संस्कार-कौस्तुभेऽपि आलोचितेयम्। दत्तकतिलकवद्दत्तकमीमांसायामपि-- अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेत्। इन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामः। अग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छतीति वाक्ये प्रजाफलकत्वमिष्टे श्रूयते। तद्यत्रानुत्पन्ना प्रजा तत्र तदुत्पत्तिरेव भाव्या। यत्र तूत्पन्ना परिगृह्यते तत्रोत्पत्तेरेवाभावात् तस्याः प्रजात्वमेव भाव्यमिति कल्प्यते प्रकृतविध्यन्यथानुपपत्तेः।।-- दत्तकमीमांसा (p. 60)। इयं पुत्रेष्टिः पुनः साग्नेरेव। उक्तं च। इष्टिस्तु चरुणा प्रोक्ता, यागस्तु पशुनास्मृतः। एतच्छेषं क्रतुः प्रोक्तो होमान्यत् पूजनं स्मृतम्। पुत्रेष्ट्याः तादृशेन द्रव्येण सम्पादनम्। शौनकवशिष्ठादीनां ग्रहणं तेषु तेषु ग्रन्हेषु तत्तद्वेदशाखिनां कृते। तैत्तिरीयास्तु बौधायनोक्तेन विधानेन पुत्रग्रहणं सम्पादयन्ति। उक्तशास्त्रोक्तविधानं विना गृहीतः पुत्रो न सिद्धो भवति। स केवलं ग्रासाच्छादनभागी विवाहयोग्यश्च भवतीति दत्तकचन्द्रिका। वशिष्टवचनेन मातापित्रोरुभयोरेव पुत्रजननव्यापारे तुल्ययोगात् द्वावेव दानविक्रयत्यागेषु अधिकारयुतौ। नैकश्च पुत्रोदातव्यः।

---

57. वशिष्ठधर्मसूत्र दत्तकमीमांसा (p. 71)

(22a) Thus spoke Baudhāyana (in his *Gṛhyasūtra*, Gṛhyaśeṣa portion, 2nd Praśna, sixth chapter) : This is generally for those who maintain the Vedic fire (by daily oblations). The portion "*atha* etc." is to be construed as referring to adoption made by persons who donot maintain Vedic fire (by offering oblations daily), for, in the case of Sāgni (ie. who maintains Vedic fire), it will be said presently that such persons can adopt a son after performing the Putreṣṭi sacrifice, and in the case of a Niragni (ie. who does not maintain Vedic fire)—adoption is sanctioned after performance of a Mahā-vyāhṛti homa, the description of the procedure (narrated before in fol. 21.b) being applicable as parts of both (the procedures for Sāgni Niragni) (mentioned). Now, Putreṣṭi is the ritual where aṣṭakapāla puroḍāśa (sacrificial cake cooked in eight *kapālas* or earthen potsherds) in offered to Agni Putravat, *ekādaśakapāla puroḍāśa* to Indra Putrim by a man seeking progeny. For him Agni procures progeny and Indra delivers that (when) developed—This is well-known. This ritual comes first, for there is the statement—"Taking a five year old boy (for adoption) one should first of all perform the Putreṣṭi"—and because of this, right at the beginning the ritual is to be done.

Vaśiṣṭha also said (thus) : "A son is born of the sperm and generative fluid from both the parents. Both of them are eligible in the act of gift, sale or desertion of that boy"—(and) the only son should not be given in adoption nor should it be accepted as such. Because he is for the continuity (of the family) of the forefathers.

(22a) বৌধায়ন এইরূপ বলেন (বৌধায়ন গৃহ্য কোষ II.6)—ইহা সাধারণতঃ সাগ্নিক ব্রাহ্মণের করণীয়। (বৌধায়ন বচনস্থ) অথ প্রভৃতি শব্দের দ্বারা নিরগ্নিক কর্ত্তৃক দত্তকপুত্র গ্রহণের ব্যাপারে বলা হইয়াছে এইরূপ বুঝিতে হইবে। সাগ্নিক ব্রাহ্মণের ক্ষেত্রে পুত্রেষ্টি যাগ সমাপনের পর দত্তক গ্রহণ হয় এইরূপ অগ্রে বলা হইবে বলিয়া (এবং) নিরগ্নিপুরুষদ্বারা মহাব্যাহৃতি হোমের পরই দত্তক গ্রহণের বিধান থাকায় উভয় অঙ্গেতেই এ স্থলে সম্ভব হওয়ায় (এখানে fol. 21.bতে বলা হইল)। পুত্রেষ্টি এইরূপ—পুত্রবৎ অগ্নির উদ্দেশ্যে অষ্টাকপাল পক্কপুরোডাশ, পুত্রী ইন্দ্রকে একাদশ কপালপক্ক পুরোডাশ হোমে অপর্ণ করিবে—সন্তান কামনায়। অগ্নিই তাহার সন্তান উৎপাদন করান (করেন), ইন্দ্র বৃদ্ধিপ্রাপ্ত প্রজা দান করেন ইত্যাদি (শাস্ত্র) প্রসিদ্ধ।

পূর্বে এই যাগ করিতে হয়। (তাহার পর) দত্তক গ্রহণ কালে—পঞ্চবর্ষীয় বালককে লইয়া (অর্থাৎ দত্তকগ্রহণের কালে) প্রথমে পুত্রেষ্টি যাগ করিবে এই বচন বশতঃ গ্রহণসংকল্পের পূর্বেই এই যাগ বিধেয়।

বশিষ্ঠও বলিয়াছেন—শুক্র ও শোণিতের হইতে সম্ভূতপুত্র মাতা ও পিতা উভয়ের সহযোগেই জাত—তাহার দান, বিক্রয় ও ত্যাগ উভয়েই করিতে পারেন—ইত্যাদি। একমাত্র পুত্রকে দান করিবে না অথবা গ্রহণ(ও) করিবে না। যেহেতু সে পূর্বপুরুষদের বংশের ধারক বা রক্ষক।

## 42. मूलम्

**(22B) पूर्व्वेषाम्। न स्त्री दद्यात् प्रतिगृह्णीयाद्वान्यत्रानु-ज्ञानाद्भर्त्तुरिति। शुक्रशोणितयोर विनाभावेन पुत्रस्य जननात् तस्य दानविक्रयत्यागेषु मातापित्रोर्यथेष्टता (।) अत्र माता-पितराविति द्वन्द्वनिर्द्देशात् द्वयोरेव जनकत्वाविशेषात् दानविक्रयादौ स्वातन्त्रमिति प्रतीयते। किञ्च तत्रापि जीवति पत्यौ स्त्रियाः स्वातन्त्रेण दानविक्रये नाधिकारः। तथाहि ''पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्रास्तु स्थविरे भावे[58] न स्त्री स्वातन्त्र्यमर्हती''ति (मनु 9.3)। ''अस्वतन्त्राः स्त्रियः सर्व्वाः पुत्रा दासाः परिग्रहाः'' इत्यभिधाय वाल आषोड़शाद्वर्षात् पौगण्डश्चापि कथ्यते। परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते। जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः। तयोरपि पिता श्रेयान् वीज प्राधान्यदर्शनात्। अभावे वीजिनो माता तदभावे तु पूर्व्वजः इत्यादि वृहस्पत्युक्तेः।[59] (अतएव शुक्रशोणित)--**

**दीप्तिः**

**(22b)** न स्त्री स्वेच्छया सूतं दद्यात् प्रतिगृह्णीयाद्वा। तथा च मनुक्चनम् न स्त्री स्वातन्त्र्यमर्हति इति। मूले वृहस्पतिनाम्ना उद्धृतं वचनं तु नारदस्मृतितो गृहीतम्।

---

58. V.L. रक्षन्ति स्थविरे पुत्राः

59. वस्तुतस्तु वचनानि इमानि नारदस्मृतेः ऋणादान प्रकरणात् (v.v. 34ab, 35 ed, 36-37) उद्धृतानि। बौधायन धर्मसूत्रस्य गोविन्दस्वामिकृत विवरण टीकायामपिनारदनाम अकृत्वेव ''गर्भस्थैः सदृशो ज्ञेय आऽष्टमाद्वत्सराच्छिशुः। वाल आषोड़शादज्ञेयः पौगण्डश्चापि शब्द्यते—इति नारदीयम् ऋणादान प्रकरणस्थ (135) वचनम् उद्धृतम्। कोष्ठकान्तर्गतं (अतएव शुक्रशोणित) पुनरुक्तं लिपिकर प्रमादात्, अतस्तत्त्यक्तम् ।

अत्र सामान्येन इयं व्यवस्था। पुत्रग्रहणे विधवायाः नाधिकारः। पत्युरनुमतौ तन्मरणात् परमपि दत्तकादिग्रहणम् भवति। जीवति भर्त्तरि तदनुमतौ, प्रोषिते उपरते वा तस्मिन् विनापि तदनुमतिं स्त्रियः पुत्रं ग्रहीतुं प्रभवन्ति। अत्र दत्तककौमुदीवचनम्–"अत्रेदं बोध्यं मृते भर्त्तरि तदननुमतापि तदीय पत्नी पुत्रग्रहणादिकारिणीति व्यवस्था दत्तकचन्द्रिका दत्तकदीधिति दत्तकमीमांसा वीरमित्रोदयग्रंथकृतां सम्मता। तन्मध्ये कस्यचिल्लिखनस्वरसलभ्या । एतद्विषये दीधितिकारेण बन्ध्या वा मृतपुत्रा वा पुत्रार्थं समुपोष्य चेति शौनकीय विशेषवचनान्तरमित्यपि लिखितमित्यलम् (दत्तककौमुदी–दत्तकशिरोमणि (पृ: 244-45 पृष्ठायाम्) स्थिता। अत्र दत्तकचन्द्रिकायाम्–स्त्रियास्तु जीवति भर्त्तरि तदनुमतौ प्रोषिते मृते वा तदनुज्ञां विनापि । यत्तु वशिष्ठोक्तं न स्त्री दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुरिति–तत्र अनुमतिश्च अप्रतिषेधेऽपि भवति। अप्रतिषिद्धं परमतमनुमतं भवतीति न्यायात्- (दत्तकचन्द्रिका (सं भरत शिरोमणि) पृ: 9)। तत्र दत्तकमीमांसा (सं भरत शिरोमणिः) 52पृष्ठा द्रष्टव्या । शूद्रकर्त्तृक पुत्रग्रहणे ब्राह्मणेन होमः कर्त्तव्यः इत्यादि। अत्र स्मर्त्तव्यं यद् आपस्तम्बधर्मसूत्रमते अपत्यस्यं दानं क्रयोविक्रयो वा नाभिहितम्। वौधायनधर्मसूत्रे च औरसेतरः पुत्रो भवितुं नार्हति इत्युक्त्वापि औरसेतरपुत्राणां परिगणनं कृतं तदर्थंदायभागश्च विहित इत्यादि विमर्शार्थं द्रष्टव्यो ग्रंथस्यास्य उपोद्घातः ।

(22b) Without (previous) permission of husband the wife should neither give away nor accept (a son in adoption). Since the birth of the son is possible from the insaparable semen and generative fluid, both his father and mother are sufficiently eligible in the act of giving him in adoption, selling him or deserting him. Here the use of the Dvandva compound in mātāpitarau—the procreativeness of both being told without discrimination, both have independence in the matter of gift or sale (of such offspring).

But even then, while the husband is living, the wife independently has no right to gift or sale etc. Thus Manu (9.3) has said—"the father protects the girl in her tender age, the husband in youth and the sons in old age—women does not deserve independence." Bṛhaspati also has (in fact the words are from Nārada smṛti, *ṛṇādāna* section, VV. 34 ab, 35 cd, 36-37) starting with "all women are under other's control, so also they are minor boys, slaves and the retinue"—(concluded with) "up to the sixteenth year one is a *bāla*

(minor) and is also called *pauganda*" and beyond that age they are eligible to handle litigation and are independent except when the parents are living and present. While they (ie. the parents) are alive, a son although old is not independent. Even, of the parents, father is more effective (important)—because it is generally accepted that (of the natural generative fluid and paternal semen) it is the paternal seed that is more important. In the absence of such person (who fertilses) the mother holds the important position and in her absence the elder brother.

Therefore it is told that the offspring comes (from the coagulation of semen and generative fluid) etc.

(22b) স্ত্রীলোকে স্বামীর অনুমতি ভিন্ন পুত্র দান বা গ্রহণ করিবে না। (পিতার) শুক্র ও (মাতার) শোণিতের মিশ্রণ হইতেই পুত্রের (সন্তানের) জন্ম হয় বলিয়া তাহার দান, বিক্রয় ও ত্যাগে মাতা ও পিতা উভয়েরই যথেষ্ট অধিকার। এখানে মাতাপিতরৌ এই পদে দ্বন্দ্ব সমাসের দ্বারা কাহারোই পুত্র জননবিষয়ে বিশেষ কিছু না থাকায় (অর্থাৎ একজনের অধিক বৈশিষ্ট্য, অন্যজনের কম এইরূপ না থাকায়) দান বিক্রয়াদিতে তাহাদের অন্যনিরপেক্ষত্ব স্বীকার্য। কিন্তু সেক্ষেত্রে স্বামী জীবিত থাকিতে স্ত্রীলোকের পুত্রদান ও বিক্রয়ব্যাপারে স্বতন্ত্রভাবে কোনও অধিকার নাই। (মনুও তাই 9.3 বলিয়াছেন) কুমারী অবস্থায় কন্যাকে পিতা রক্ষণাবেক্ষণ করে, যৌবনে স্বামী স্ত্রীকে রক্ষা করে, বার্ধক্যে পুত্রেরা (বৃদ্ধা মাতার) রক্ষণাবেক্ষণ করে। (এইরূপে সকল অবস্থায় স্ত্রীলোক অপরের রক্ষণে থাকলেও) তাহাদের স্বাধীনজীবনে অধিকার নাই। "সকল স্ত্রীলোক, পুত্র, দাস ও পরিজনেরা অস্বতন্ত্র"—এইরূপে উপক্রম করিয়া—"ষোড়শবর্ষ পর্যন্ত বালক অবস্থা (তাহাকে) পৌগণ্ডও বলা হয়। তাহার পর (বয়োবৃদ্ধির সহিত) সে ব্যবহারতত্ত্ব জানিবার অধিকারী হয়—কিন্তু পিতা মাতা জীবিত থাকিতে বৃদ্ধ হইয়াও পুত্র স্বতন্ত্র হইতে পারে না। তাহাদের অর্থাৎ জনক জননীর মধ্যেও পিতার বীজের প্রাধান্য দৃষ্ট হওয়ায় পিতারই প্রাধান্য (বীজী পিতার অভাবে মাতা প্রধান, তাঁহার অভাবে অগ্রজ ভ্রাতা প্রধান" ইত্যাদি বৃহস্পতি বচনেও (প্রকৃতপক্ষে নারদ বচনেও) (উপসংহার) দৃষ্ট হয়—তাই বলা হইয়াছে শুক্রশোণিত সম্ভব পুত্র ইত্যাদি।

## 43. मूलम्

(23A) (अथेत्यादि। पुत्रेष्टिं प्रथमश्चरेत् इत्युक्तेः। प्रथममिति सङ्कल्पात् प्राक्)* साग्नेः पुत्रेष्टिपूर्व्वकग्रहणमाह श्रुतिः। ''स्वाराज्यकामोऽश्वमेधेन यजेत राजा राजपुरोहितो वा। अथ साम्राज्यकामः साम्राज्येष्टिमिहवाव पुत्रर्द्धिकामः पुत्रेष्टिं चरन्नावसथ्यं जुहोती''ति। पुत्र एव ऋद्धिः सम्पत्। आवसथ्यश्चतुर्थोऽग्निः साग्नीणां काम्यसाधक इति छान्दोग्य–

(23B)

## 44. मूलम्

भाष्यम्। तथाहि दाक्षिणात्यगार्हपत्याहवनीयासस्त्रयो दर्शादि नित्यकर्म्मादिसाधकाः। काम्यसाधकस्त्वावसथ्य एवेति साग्नेरेव पुत्रेष्ट्यधिकारात्तदङ्गकग्रहणऽपि साग्नेरधिकार इति सिद्धम्। निरग्नेस्त्वाह वशिष्ठः। शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकस्तस्य दानविक्रयत्यागेषु मातापितरौ प्रभवतः। नैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा। स हि सन्तानाय पुर्व्वेषाम् । न स्त्री दद्यात् प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुः। पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि च निवेद्य निवेश्नस्यमध्ये महाव्याहृतिभिर्हत्वा (अदुरबान्धवं बन्धुसन्निकृष्टमेव) प्रतिगृह्णीयात इति व्याख्येयमग्रे। अत्र महाव्याहृति होमोत्तरमेव ग्रहणमभिहितं न तु पुत्रेस्याद्युत्तरमिति।

---

* 22 (a+b), 23 (a+b), 24a पृष्टासु प्रायेण एकस्यैव विषयस्य असकृदा वृत्तिर्दृश्यते। शुक्रशोणितसम्भवः पुत्र इत्यादि वशिष्ठोक्तिमारभ्य-साग्निक कर्त्तृक ग्रहणम् इत्यादि 22(a) पृष्ठायाम्, 23(b) पृष्ठायाम्, 24(a) पृष्ठायाम् अपिलिखितम्। एवमन्येऽपि अतो लिपिकर प्रमादरुपाणि तानित्यक्तानि–। तथापि सन्देह निरसनार्थं पादठीकायां–अथेत्यादि। निरग्निकर्त्तृकग्रहणे, अथैनमित्यादि साग्निकर्त्तृकग्रहणे वोद्धथम्। साग्नेः पुत्रेष्ठियागानन्तरं निरग्नेर्महाव्यान्हति होमानन्तरं ग्रहण विधानस्योभयस्यात्र सम्भवात्। पुत्रेष्टिस्तु अत्र (अथ) पुत्रवते पुरोडाशमष्टाकपालम् इन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजा जनयितु (जनयति) वृद्धाम् इन्द्रः प्रयच्छतीति प्रसिद्धः। आदावेष यागः। गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमश्चरेदित्युक्तेः। प्रथममिति सङ्कल्पात् प्राक् (इति 23a पृष्ठायाम्) अत्र च वशिष्ठस्मृतौ शुक्रशोणितयोरविनाभावेन पुत्रजननात्तस्य दानविक्रयादौ मातापित्रोऽवाधिकारः। पितराविति द्वन्द्व निर्देशात् द्वयोरेव जनकत्वाविशेषाच्च। तत्रापि जीवति पत्यौ पत्या न स्वातन्त्र्येणाधिकार इत्यादि वक्ष्यते (23b पृष्ठायाम्) अत्र च वक्ष्यमाण वशिष्ठस्मृतौ इत्यारभ्य अव्यवहितपूर्वस्य अंशस्य पुनरूल्लेखः..... न स्वातन्त्र्येण दानाधिकार इति वक्ष्यते-इति पर्यन्तस्य (24a पृष्ठायाम्) अतो महान् प्रमादः समजनि लिपिकरस्य इति वुद्ध्या पुनरुक्तांशस्य वर्जनम् एव समुचितम्॥

दीप्तिः

23(a+b) निरग्निकर्त्तृकग्रहणं महाव्याहृति होमानन्तरमेव। तदेव स्पष्टयति। एकमात्रस्य पुत्रस्य विषये-नैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा। अत्र भवदेव मते यस्य एक एव पुत्रः तं नापरो गृह्णीयात्—न वा तं दद्यात्। एवमन्येऽपिदत्तकमीमांसाकारादयः। तादृशं गृह्णातिचेत् पुत्रत्वं सुतरां सिध्यति–किन्तु निषेधोल्लङ्घनजन्यः प्रत्यवायोऽपि आसज्यते दातुरिति स्मार्त्तसमयः।

23(a+b) [*atha* etc. This is in connection with adoption by one called Sāgnika] from the statement—putreṣṭi is to be done first, first means before making the Saṅkalpavākya (of the adoption ceremony). Vedic texts (thus) sanction the adoption by one Sāgnika with putreṣṭi ritual done beforehand:

"While desiring his own kingdom the king will perform Aśvamedha or (cause it to be done by) the priest of the king. Then desiring an empire he will perform a Sāmrājyeṣṭi and desiring prosperity of having son will perform putreṣṭi (where) at the end he will offer oblation to the (sacred) Āvasathya fire. The word putrardhi (the above passage is analysed as putra eva ṛddhi ie. prosperity in the form of son. Āvasathya is the fourth sacrificial fire (place) where the Sāgnikas offer oblation while doing kāmya (ie. desired works, not obligatory works) (and) this has been noted in the *Chāndoyabhāṣya*. (23a)

Because Daksīṇa, Gārhapatya and Āhavanīya are (the three sacrifical fires which are) instrumental to perform of compulsory/obligatory rituals like Darśa, Parṇamāsa etc. and therefore it is Āvasathya which is instrumental to the performance of desired rituals for Sāgnikas and since the Sāgnikas are entitled to the performance of putreṣṭi—they are entitled to the (process of) adoption which is a part of that and that is thereby proved.

In the case of Niragnika, Vaśiṣṭha has said : The son is procreated by both the mother and the father conjointly as he comes out of the inseparable mixture of semen and the generative fluid, in the matter of gift or sale of desertion of him both are eligible. One should not take in adoption the only son nor should the only son be given in adoption

because he is for the continuity of the family of the forefathers. Without previous permission from the husband the wife should neither give nor receive (a son in adoption). While preparing for adoption a man should invite (all) cognates, make a submission to the king (in his absence to the village landlord) inside the house perform the *mahāvyāhṛti homa* (and) adopt (a boy). This is to be explained subsequently. Here adoption is prescribed after the *mahāvyāhṛti homa* only and not after the putreṣṭi yāga. (23b.)

23(a+b) অথ ইত্যাদি। প্রথমে পুত্রেষ্টি করিবে। প্রথমে অর্থাৎ (দত্তক গ্রহণের) সংকল্পের পূর্বে। সাগ্নিক যে পুত্রেষ্টি করিয়া দত্তক গ্রহণ করিবে সে বিষয়ে শ্রুতিবাক্য যখন নিজ রাজ্যের আধিপত্য কামনা করে তখন রাজা নিজে অশ্বমেধ যজ্ঞ করিবেন অথবা রাজপুরোহিতের দ্বারা তাহা করাইবেন। তাহার পর সাম্রাজ্য কামনায় সাম্রাজ্যেষ্টি করিবেন, তাহার পর ইহলোকে পুত্ররূপ সম্পদ কামনায় পুত্রেষ্টির অনুষ্ঠান করিয়া আবসথ্য অগ্নিতে হোম করিবেন। পুত্রই ঋদ্ধি বা সম্পদ্ পুত্রর্দ্ধি। ছান্দোগ্য ভাষ্যে আছে সাগ্নিকদের কাম্যকর্ম নিষ্পাদক অগ্নি হইল আবসথ্য।

দক্ষিণ, আহবণীয় ও গার্হপত্য এই তিনটি অগ্নি—দর্শপূর্ণমাসাদি নিত্য-কর্ম সাধক অগ্নি। কাম্যকর্ম সাধক অগ্নি হইল আবসথ্য—। সাগ্নিকেরই পুত্রেষ্টিতে অধিকার থাকায়—তাহার অঙ্গরূপ দত্তকগ্রহণেও সাগ্নিকেরই অধিকার ইহা সিদ্ধ হইল। নিরগ্নি বিষয়ে বশিষ্ঠ বলেন—শুক্রশোণিত সঞ্জাত পুত্র পিতামাতার মিলন সম্ভূত বলিয়া উভয় নিমিত্তক। তাহার দান, বিক্রয় ও ত্যাগে মাতা ও পিতা উভয়েই অধিকারী। একমাত্র পুত্রকে দান করিবে না গ্রহণও করিবে না কারণ সে পূর্বপুরুষের বংশধারার রক্ষক। স্ত্রীলোকে স্বামীর অনুমতি ভিন্ন পুত্র দান বা গ্রহণ করিবে না।

দত্তক পুত্র গ্রহণ করার সময়ে সপিণ্ড আত্মীয়দের আহ্বান করিয়া রাজাকে (অভাবে গ্রামের ভূস্বামীকে) জানাইয়া, গৃহের মধ্যে মহাব্যাহৃতি হোমগুলির অনুষ্ঠান করিয়া গ্রহণ করিবে—ইত্যাদি অগ্রে ব্যাখ্যাত হইবে। এখানে মহাব্যাহৃতি হোমের পরই পুত্র গ্রহণের কথা বলা হইয়াছে পুত্রেষ্টি প্রভৃতির পর নয়।

## 45. মূলম্

**(24A) গোত্রাপহারস্তু চুডাদি সংস্কারেষু বৃদ্ধিশ্রাদ্ধে স্বগোত্রোল্লেখেন ভবতি। তদাহ দানধর্মে তথা দত্ত (ক) কৃতৌ পুত্রাবিত্যাদ্যনন্তরং যুধিষ্ঠিরপ্রশ্নে**

**भीष्मबाक्यान्[60]। माता-पितृभ्यां यस्त्यक्तः पथि ततं यः प्रकल्पयेत्। न चास्य मातापितरौ ज्ञायेतां स हि कृत्रिमः।। यो वर्णः पोषयेत्तन्तु सवर्णस्तस्य जायते।। आत्मबत्तस्य कुर्व्वीत संस्कारं स्वामिवत्तया।। तथा संस्कृतस्य तु दत्तस्य वर्णगोत्रं भवत्युत। अथ देया तु कन्यास्या(त्त)द्वर्णस्य युधिष्ठिर।। इति। तथा उपपन्नो गुणैः सर्व्वैः पुत्रो यस्यास्ति दत्रिमः।**

**दीप्तिः**

(24a) ग्रहणात् परक्षणे एव ग्रहीतुः पुत्रपदं तद् गोत्रञ्च लभते दत्तकः। तेन ग्रहणात् प्राक् पुत्रजनकेन ये ये संस्काराः सम्पादिताः न ते ग्रहीत्रा करणीयाः, शिष्टा एव सम्पादनीयाः। संस्काराणां शरीरशुद्धिजनकत्वात् जनकेन पूर्वं ये संस्कारा न विहिता ग्रहणादूर्द्धं ग्रहीत्रा ते सम्पादनीयाः। सगोत्रादेव पुत्रो गृहीतश्चेत् तत्रापि परिग्रहीतृजन्य कर्मादिकं दत्तकस्य। अर्थात् परिग्रहीतुरेव स पिण्डं दद्यात् न तु जनकस्य। किञ्च परिग्रहीतुः वेदोक्तकर्मादिकम् अपि स कुर्यात्। उदाहरणवशात् यदि सामवेदिनः पुत्रो यजुर्वेदिना गृह्यते तत्र दत्तको यजुर्वेदोक्तं कर्म एव समाचरेत्, न सामवेदोक्तम्। चूडाकरणवृद्धि-श्राद्धादिकर्मषु गोत्रोल्लेखस्य प्रयोजनवशात् तत्र दत्तकस्य गोत्रं ग्रहीतुः गोत्रेणैव व्यवस्थितम्।

अधुना महाभारतीयानुशासनपर्वणः पुत्राणां स्वरूपनिरूपणम् ।।

(24a) [The portion from "*atra ca vakṣyamāṇa vaśiṣṭha smṛtan.....vakṣyate*" is repeated although written in fol. 23b.—through scribal error]

The change of the Gotra name is made by referring to the (newly acquired) Gotra in (the course of the Vṛddhi-śrāddha included in the sacramental works like) cūḍākaraṇa etc. In the dānadharma section (of the anuśāsana parvan of the *Mahābhārata*) in the section on principle of adoption—in reply to Yudhiṣṭhira's question the words of Bhīṣma (are): after uttering the word '*putrau*' (two sons)—

---

60. महाभारते XIII (अनुशासनपर्वणि) 49-20; 21 ed, 25ab V.L. ..... सन्त्यक्तं पथि यं तु प्रकल्पयेत्। .... ज्ञायेते स हि .... ।। २० ।। यो वर्णः पोषयेद्यन्तु ...। सवर्णस्तं च पोषेत सवर्णस्तस्य जायते ।। २।। अथ देया तु कन्या स्यात् तद्वर्णेन युधिष्ठिर। ।। 25ab।।

"He who is deserted by mother and father and picked up from the road by some one and whose parents cannot be located—is (known as) a *kṛtrima* son. The caste of the person who rears him becomes his caste (also). The (adoptive person) treating him as if his own, as if his master, should perform (necessary) sacraments. The caste and gotra (of the performer) accrue to the boy thus refined by sacraments (ie. baptized so to say) and adopted. And then a bride also is to be procured for him befitting his caste—Oh! Yudhiṣṭhira". And the adopted son who possesses all the qualities of a son shall

(24a) বক্ষ্যমাণ বশিষ্ঠ স্মৃতৌ.......বক্ষ্যতে এই অংশটি লিপিকর প্রমাদবশত: পুনর্লিখিত ব (যে বংশে দত্তকের জন্ম সেই বংশের) গোত্রনামের অপসারণ চূড়াকরণাদি সংস্কার মধ্যে যখন বৃদ্ধি শ্রাদ্ধ করা হয় তাহাতে নিজ গোত্রের (অর্থাৎ দত্তকগ্রাহকের গোত্রের) উল্লেখ পূর্বক করা হয়। তাই মহাভারতের (অনুশাসন পর্বস্থ) দানধর্ম পর্বাধ্যায়ে তথা দত্তক করণ পর্বাধ্যায়ে 'পুত্রৌ' ইত্যাদির পর যুধিষ্ঠিরের প্রশ্নে ভীষ্মের বাক্য (উত্তর)—মাতা ও পিতার দ্বারা পরিত্যক্ত বালককে পথমধ্যে যে গ্রহণ করিবে এবং যে বালকের মাতা পিতাকে জানা যাইবে না—তাদৃশ পুত্র কৃত্রিমপুত্র। যে বর্ণের লোক তাহার ভরণ পোষণ করিবে কৃত্রিমপুত্র তাহার সমান বর্ণ হইবে। নিজ বর্ণানুযায়ী তাহার (চূড়াকরণ-উপনয়নাদি) সংস্কার করিবে এবং প্রভুর মত সংস্কার করিবে। দত্তক পুত্রেরও সেইভাবে সংস্কার করিয়া তাহার (ব্রাহ্মণাদি) বর্ণ ও গোত্র নির্ধারিত হয়। হে যুধিষ্ঠির, তাহাকে সেই বর্ণের কন্যা সম্প্রদান করা উচিত।

যে দত্তক পুত্র সকল প্রকার পুত্রোচিত গুণযুক্ত সে অন্য গোত্রজ হইলেও পিতার ধনের সমান ভাগ পাইবেন।।

## 46. मूलम्

**(24B) स हरेत् पैतृकमृक्थं समं प्राप्तोऽन्यगोत्रजः। तथा--अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः स्वगोत्रेष्टि विधानेन स भवेच्च स्वशाखाभाक् इति। भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृता इत्यादि वचनैः संस्कारानन्तरमेव गोत्रापहारः इत्युक्तं भवति। अतएव चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते इति। दत्ताद्याश्चैव तनया**

**निजगोत्रण संस्कृताः। आयान्ति पुत्रतां सम्यगन्यवीजसमुद्भवा इति। पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूड़ान्तं न पुत्रः स पुत्रतां याति चान्यतः [कालिकापुराणम्, 88, 39-40]। अन्यतो ग्रहीतृगोत्रात्। शुक्रशोणितयोः कारणतां दर्शयिष्यामः। शुक्रशोणिते ह स्त्रीपुंसयोर्धातुविशेषे। ते एव निमित्तं (? निमित्ते) उत्पत्ति हेतु यस्यापत्यस्य पुत्रेत्युपलक्षणात् (पुत्र इति उपलक्षणात्)। अत्र जननकर्त्तृत्वा--**

**दीप्तिः**

(24b) गोत्रपरिवर्त्तनं भवति दत्तकविधौ समाप्ते सति । अत्रेदं बोध्यम्। मृते भर्त्तरि तदनुमत्या तदीया पत्नी दत्तकग्रहणाधिकारिणी, सा च शास्त्रीयविधिं परिपाल्यैव गृह्णाति। अथ होमाभावे गृहीतपुत्रस्य दत्तकत्वं सिध्यति न वेति सन्देहे विवादभङ्गार्णवकारेण वहुविचार्य उपनीतं यद् दत्तकव्यापारे उपक्रमे महाव्याहृति होमोऽतदसिद्धावपि पुत्रत्वसिद्धिरिति। उपसंहारे महाव्याहृतिहोमाभावे पुत्रत्वाभावस्य केनापि अप्रतिपादनात् महाव्याहृतिहोमं विनापि केवलदानप्रतिग्रहाभ्यां पुत्रत्वसिद्धि र्निष्प्रत्युहमेव। किन्तु होमाभावे पुत्रस्य प्रयतत्वविशेषो न जायते यथा मन्त्रपाठं विनापि गर्भाधानेन पुत्रोत्पत्तिर्भवत्येव, मन्त्रपाठे तु पुत्रस्य प्राप्तमेव भवति एवमेनः समं यातीति वचनात्-इति दत्तककौमुदीवचनम् (दत्तक शिरोमणि धृतम् तत्रैव 44-45 पृष्ठयोः)। इयं पुनराधुनिकानां व्यवस्था। प्राचीनास्तु संस्काराद्यनन्तरमेव गोत्र परिवर्त्तनम् इच्छन्ति भिन्नगोत्राः पृथक् पिण्डाः इत्यादि वचनात् । ऊनपञ्चवर्षीयमेव बालं गृह्णाति दत्तकरूपेण। तेष्वपि अकृतजातकर्मादिः पुत्रः मुख्यः। अकृतचुडापेक्षया यवीयान् कृतचुडपुत्रो गृहीतश्चेत् असौ विनापि समयं द्वयोरपि दातृग्रहीत्रोः द्वयमुष्यायणपुत्रो भवति। जनकेन यस्य जातकर्मादि चुडाकरणान्ताः संस्काराः विहिताः, स च यथाविधानं गृहीतः तदापि स ग्रहीतुः दासो भवति न च पुत्रः। अधुना शुक्रशोणितयोः कारणतां दर्शयितुमुप न् क्रमते। स्त्रीपुंसोरिति। स्त्री च पुमान च इति द्वन्द्वसमासे अचतुरविचतुरसुचतुरस्त्रीपुंस धेन्वनडुहर्कसामवाङ्मनसाक्षिभ्रू-वदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरंजसनिः श्रेयसपुरुषायुष द्व्यायुषत्र्यायुषर्गयजुष जातोक्षमहोक्ष वृद्धेक्षोपशुनगोष्ठश्वा (पा 5.4.77 सिः कौ 945) इति सूत्रेण निपातनात् स्त्रीपुंस इति सिध्यति। तयोः स्त्रीपुंसयोरिति।

**(24b) ..... receive equal share of the (adoptive) father's wealth although he is born in another gotra. Similarly, the**

son born in the family of another *gotra* but adopted and initiated *(=upanāyita)* by performance of the *putreṣṭi* ritual according to the particular gotra of the adoptive father is naturalised (ie. taken) into the Gotra and Vedic branch of the adopter. The statements "belonging to separate *gotra*, offering piṇḍa to others, maintaining separate lineage....etc. enjoin that transfer of *gotra* is done only after the *(cūḍākaraṇa)* sacrament. Therefore (it is held in the Kālikāpurāṇa that) if the sacraments starting from Cūḍākaraṇa are done by referring to the gotra of the adoptive father thus and then only the son thus received becomes the adopted son *(dattaka)*, otherwise he becomes a *dāsa* (slave) (and) if the *dattaka* and other sons are received by rites wherein the gotra of the receiver is mentioned they become *(de jure)* sons although they may be born of father of separate gotra. Oh, King ! the boy, whose *cūḍākaraṇa* and other sacraments are done by mentioning the gotra of the father, does not become the son (of the adoptive father), he becomes the adopted son only when such sacraments are done by referring to the gotra of the other (ie. the adoptive father) 'anyataḥ' in this statement means from the gotra of the receiver.

We shall (now) show the causality of the semen and the generative female fluid (in the formation of the foctus) sperm and gengrative female fluid are particular elements in male and female—they are the causes of birth of the baby who is called son in an extended sense.

Here, in the matter of procreation neither (ie. neither the father nor the mother) having any special role (other than the procreative power of copulation), the dvandva compound, is used to express equal importance of the both, in the word mātāpitarau—

(24b) অনুরূপভাবে অন্যবেদ শাখানুসারী এমন গোত্রজাত দত্তকপুত্রও যদি দত্তকগ্রাহকের গোত্রোচিত ইষ্টি সম্পাদনের দ্বারা উপনয়ন প্রাপ্ত হয় তবে সেও দত্তক্গ্রাহকের পুত্র ও স্বকীয়গোত্র শাখা ভুক্ত হয়।

ভিন্নগোত্রের, পৃথক্পিণ্ডের দানকারীরা পৃথক্ বংশধারার সৃষ্টি করে— ইত্যাদি বচনে চূড়াকরণের পরই গোত্র পরিবর্ত্তন হয় এইরূপ বিধান।

অতএব চূড়াকরণ হইতে আরম্ভ করিয়া অন্যসংস্কারগুলি গ্রহীতার গোত্রোল্লেখ

করিয়া (তদনুযায়ী) হয় তবেই গৃহীত পুত্র দত্তকপুত্র হইবে অন্যথা সে দাস মাত্র হইবে। (বলা হইয়াছে)—দত্তক প্রভৃতি পুত্রেরা যদি গ্রাহকের নিজ গোত্র উল্লেখ পূর্বক সংস্কৃত (অর্থাৎ চূড়াকরণাদি করা) হয় তখন অন্যগোত্রের পিতার বীজ সমুদ্ভূত হইলেও পুত্রত্ব লাভ করে।। হে মহারাজ যে (শিশু) জনকের গোত্রোল্লেখ পূর্বক চূড়াকরণ পর্যন্ত সংস্কারে সংস্কৃত হয় সে (গ্রাহকের) পুত্র হয় না। গ্রাহকের গোত্রের উল্লেখপূর্বক সংস্কার করা হইলেই সে পুত্র হয়। অন্যতঃ—শব্দটির অর্থ গ্রাহকের গোত্র হইতে ভিন্ন গোত্র (অর্থাৎ জনক) হইতে।

পুত্রজনন ব্যাপারে শুক্র ও শোণিতের কারণতা দেখাইব।

শুক্র ও শোণিত নরনারীর দেহ-ধাতুবিশেষ—তাহারাই নিমিত্ত অর্থাৎ উৎপত্তির কারণ যে অপত্যের। পুত্র শব্দটির অপত্যের উপলক্ষণ (অর্থাৎ পুত্র কন্যা উভয়েরই গ্রাহক) এখানে পুত্রোৎপাদন ব্যাপারে কাহারও বিশেষ বা অধিকতর কর্ত্তৃত্ব না থাকায় মাতা পিতা উভয়েরই সমান প্রাধান্য বুঝাইবার জন্য (মাতাপিতরৌ পদে) দ্বন্দ্ব সমাস ব্যবহার করা হইয়াছে।

## 47. मूलम्

**(25A) विशेषादुभयोः प्राधान्यख्यापनार्थो द्वन्द्वः। दद्यान्माता पिता वा यमिति, माता पिता वा दद्यातामिति मनु (9.168) याज्ञवल्क्याभ्यां (II. 130) वाकारेण तथैव द्योतनात्। एवञ्च न स्त्रीदद्यात् प्रतिगृह्णीयाद्वा इत्यत्रान्तरङ्गत्वेन प्रतिग्रहे एव नञोऽन्वयो न तु दाने। ननु साहित्ये हि द्विवचनवहूवचने द्वन्द्व समासोवेति नियमात् दानवदग्रहणेऽपि दम्पत्योः साहित्यं तन्त्रं न तु पृथक् इति चेत् साहित्यस्य द्वैविध्याद्वस्तु क्षतेरभावात्। नन्वेकस्य द्वन्द्ववचनस्योभयार्थकत्वे युगपद्वृत्तिद्वयविरोध इति चेदगत्या वचनवलाज्जहदजहत्स्वार्थलक्षणया[61] गङ्गायां धोषमत् स्यौस्त इति वत् स्वीकुर्म्मः। तदेवं पत्यौ जीवति पत्न्या न पृथग्दानाधिकारः। असति तस्मिन् स्वातन्त्र्येण दानाधिकार इति विषयविभागादुभयोः सङ्कलनम्[62]। न चात्र वाधः सापेक्षत्वनिरपेक्षत्वाभ्यां।**

---

61. लक्षणा शक्य सम्वन्धा तात्पर्यानुपातितः- इत्यादि लक्षणालक्षणं। तस्याश्च प्राधान्येन जहत्स्वार्था अजहत्स्वार्था इति रूपद्वयम्। तदर्थं काव्यप्रकाशसाहित्यदर्पणादिग्रन्थाः द्रष्टव्याः।

62. इतः परं हस्तलिखितग्रन्थे-"एवमुक्तं रुद्रधरेण शुद्धिविवेकेऽपि" इत्यधिकः पाठः। स च प्रक्षिप्त इति मत्वा परित्यक्तः। विशेषालोचनश्च टीकायां उत्पाद्धते च वर्त्तते।

**दीप्तिः**

(25a) उद्धृतवशिष्ठस्मृति वचने मातापितरौ इत्यत्र द्वन्द्वसमासः उभयपद प्राधान्यद्यो-तनार्थम्। मनु-याज्ञवल्काभ्याम् अपि मातापित्रोरुभयोर्ग्रहणं प्राधान्यख्यापनार्थम्। द्वन्द्वसमासश्च उभयपदार्थप्रधानः इति। न स्त्री दद्यात् प्रतिगृह्णीयाद्वा इत्यत्र नञः संयोगः प्रतिग्रहणेन न तु दानेन। अथ कोऽपि आक्षिपति चेत् कथं दानवत् ग्रहणेऽपि मातापित्रोः साहित्यमपेक्षितं स्यात्-तत्र लक्षणावृत्तिमवतारयति। वाच्यलक्ष्यव्यङ्ग्यभेदेन अर्थानां त्रैविध्यम्। तात्पर्यार्थास्यश्चतुर्थोऽपि स्वीकृतः। वाच्यादीनामर्थानां यथासङ्ख्यम् अभिधालक्षणाव्यञ्जनामूलत्वम्। नैयायिकाः व्यङ्ग्यार्थं न स्वीकुर्वन्ति-तन्मते अनुमाने एव तस्य अन्तर्भावः, व्यक्तिविवेकादौ महिमभट्टादिभिः स विशदीकृतः। तत्र लक्षणा या सा वृत्तिः शक्तिर्वा अभिधाव्यञ्जनावत्। सा लक्षणा अभिधेयार्थवाधिकापि अभिधेयार्थसम्वद्धा-मूलतया जहत् स्वार्थलक्षणा अथवा लक्षणलक्षणा नाम्ना, अजहत्स्वार्थ लक्षणा उपादानलक्षणानाम्ना द्विधा विभक्ता। तदुदाहरणञ्च गङ्गायां घोषः, कुन्ताः प्रविशन्ति इत्यादयः। यत्रैका भवति न तत्रापरा। किन्तु कुत्रचित् द्वयोरेव सद्भावम् अङ्गीकुर्वन्ति बुधा अगत्या। यथा गङ्गायां घोष मत्स्यौ स्तः। अत्र गङ्गापदे यदा घोषान्वयः तदा लक्षणलक्षणा, यदा मत्स्यान्वयस्तदा उपादानलक्षणा एवं एकत्रैव युगपत् नञनञ्वृत्त्योः व्यवहारः वचनवलादेव भवति। प्रकृतेऽपि दाने मातापित्रोः साहित्यम् अपेक्षितम् प्रतिग्रहे केवलं पितुः, मातुस्तत्र अस्वतन्त्रत्वात्। सिद्धान्तस्तु पत्यौ जीवति पन्त्या न पृथग्दानाधिकारः। असति तस्मिन् स्वातन्त्र्येण दानाधिकारः।

हस्तलिखितग्रन्थे अत्र मैथिलस्मार्त्तरुद्रधरकृतस्य शुद्धिविवेकग्रन्थस्य उल्लेखः कृतः। स च प्रामादिकः प्रक्षिप्तश्च। रुद्रधरीयशुद्धिविवेके (fol. 22b) एवं कथितम्। मातृपित्रोः (मातापित्रोः) पुत्रदानादावधिकारः। पत्यौ सति स्त्रियाः पत्यननुमत्या पुत्रदानेऽनधिकारः। पत्यनुमत्या तु पुत्रदानेऽधिकारः। पत्यभावेऽनधिकार एव। अतो लिपिकरः यदलिखत्–"एवमुक्तं रुद्रधरेणापि शुद्धिविवेकेऽपि" इति–वस्तुगत्या तद्रुद्रधरमतविपरीतमेव। इयमेका समस्या। मैथिलरुद्रधरस्य काल 1425-60 A.D. मध्ये आपतति। [तदर्थं द्रष्टव्यं मत्पुस्तकं Dharmashastra in Mithila (पृः 155)] स च मैथिलस्मार्त्तः गौडीयस्मार्त्त शूलपाणिकृतश्राद्धविवेक ग्रन्थमुद्धरति स्म। प्राचीनगौहीय स्मृतिनिबन्धकारेषु भट्टभवदेव-जीमुतवाहन-अनिरुद्धभट्ट-वल्लालसेन-हलायुध-शूलपाणि प्रभृतिषु भट्टभवदेव एव प्राचीनतमः इति धर्मशास्त्रेतिहासविदां मतम्। किञ्च रुद्रधरीयशुद्धिविवेक ग्रन्थेऽपि (fol. 35b, 36b) भट्टभवदेवस्योल्लेखो लक्षितः। अतस्तस्य पुनरुल्लेखो भवदेवीयनिबन्धे संशयमातनोति-

कालविपर्ययदोषश्चाक्षिपति। अत इयं पंक्तिः प्रक्षिप्ता इति विद्वद्भिर्मन्तव्या। अथवा अन्योऽयं प्राचीनतरो रुद्रधरः। अत्र स्मर्त्तव्यं यत् दत्तकतिलकस्य द्वितीये हस्तलिखितग्रन्थे (fol. 18b) कल्पतरुरत्नाकरयोरुल्लेखः। तस्मात् तस्य दत्तकतिलकग्रन्थस्य लेखकः भवदेवः द्वितीयः कश्चन पूर्वजनमाननामासीत् इति प्रत्नविदां मूर्धन्यः ननीगोपालमजुमदारमहाभागः प्रोक्तवान्। महामहोपाध्यायभरत-शिरोमणिमहोदयसम्पादिते दत्तकशिरोमणि ग्रन्थे तु अस्य ग्रन्थस्य सङ्कलनं कृतम् न जाने कथम्। अलं परमगुरुकल्पानां वचनेषु कटाक्षनिक्षेपेण।

(25a) Manu in his statement "whom the mother or the father gives away and Yājnavalkya in his either the father or the mother should give" have indicated the same by using the particle *vā* (= or). Thus "the wife should neither give away nor receive (any son is adoption)"—in this statement the sense of the negative particle is to be construed with acceptance (pratigraha) ie. the wife should not accept as it is more proximate and and with *dāna* (gift).

Now, in the sense of togetherness or association dual or plural number is used at the end of the Dvandva (or copulative) compound and for this rule, in the matter of receiving a son as in the matter of giving away a son, lat there be emphasis on the association of both members of the couple and not on one member only—if such objection is raised ! The reply is no, because association is of twofold nature and for that there is no loss of the essential matter.

Further—if one word in Dvandva compound indicates two senses (ie. the husband will receive, the wife will not) simultaneously—there is contradition in the function in the semantic element of the word (by which it expresses, indicates or suggests a meaning) then ! (In the face of such prima facia argument, it is said that) finding no other way one is to accept, on the strength of statements (of law givers) by jahat-ajahat-svārtha-laksaṇā (or the type of *lakṣaṇā vṛtti* admitting of the contradictory senses like *jahat svārtha* and *ajahat-svārtha* in the same expression), the above interpretation is accepted just as in the expression—the cowherd collony and fish are in the ganges (is accepted). [when one says—cowherds live in the ganges—the word ganges does not mean the stream of water traditionally dug in by Bhagiratha. The indicated

meaning is very near the waterline. So, here the original meaning of the word is disearded. When one says fishes live in the Ganga the original meaning of the word is not removed (fishes are available in some waterpool) hence it is *ajahatsvārtha*. So in the complete sentence—in one part it is *jahatsvārtha* and in another part it is *ajahatsvārtha*.

So the conclusion is that when the husband is alive, wife has no unilateral right to give away a son. In his absence, the wife can do it independently. In this way by dividing the scope of the import of the sentence it is compiled. In fact there is no obstruction here by dependence or independence (on the husband) the act of gift does not appear in separate form.

(25a) মনু প্রোক্ত "মাতা বা পিতা যাহাকে দান করেন...." ইত্যাদি যাজ্ঞবল্ক্য কথিত "মাতা বা পিতা যাহাকে দান করেন...." ইত্যাদি বাক্যে অনুরূপ প্রতিপাদিত হইয়াছে বলিয়া (এইরূপ বলা হইল)। অনুরূপভাবেও স্ত্রীলোকে দান করিবেন না বা গ্রহণ করিবেন না। এই বচনে নিকটতর বলিয়া নঞের সম্বন্ধ স্বীকারের সহিত, দানের সহিত নয়।। আচ্ছা সাহিত্য বা একত্রাবস্থান বুঝাইতে দ্বন্দ্ব সমাস বা দ্বিবচন বা বহুবচনের প্রয়োগ হয় এই নিয়মে দানের মত গ্রহণের ব্যাপারেও দম্পতীর উভয়েরই একত্রাবস্থান বা সহিতত্ব প্রধানরূপে গৃহীত হউক—পৃথক্‌ভাবে নয়। অর্থাৎ দম্পতী উভয়ে মিলিত হইয়াই দত্তকপুত্র গ্রহণ করুক—এইরূপ বলিলে উত্তর এই যে সাহিত্য দুই প্রকার হইলেও সাধনীয় বস্তুর ক্ষতি হয় না বলিয়া (তাদৃশ) অর্থের প্রয়োজন নাই। আচ্ছা—একটি দ্বন্দ্ব সমাস নিষ্পন্ন মাতাপিতরৌ পদের উভয়ার্থকত্ব গ্রহণ করিলে (মাতা গ্রহণ করিবে না, পিতা করিবে ঈদৃশ অর্থ গ্রহণ করিলে) একই সঙ্গে দুইটি বৃত্তি গ্রহণরূপ বিরোধ হয় না কি? এস্থলে গত্যন্তর না থাকায় (মনু যাজ্ঞবল্ক্যাদির) বচন বশতই গঙ্গায়াং ঘোষমৎস্যৌ (গঙ্গাতে ঘোষ পল্লীও মৎস্য) বাক্যে যেমন জহদ-জহৎ স্বার্থ লক্ষণা দ্বারা শাব্দবোধ হয় তদ্রূপ হইয়াছে ইহা স্বীকার করি।

তাই (সিদ্ধান্ত এই যে) পতি জীবিত থাকিতে পত্নীর স্বাধীন ভাবে দানে অধিকার নাই। পতি না থাকিলে (তাহার মরণের পর) স্বতন্ত্রভাবে পত্নীর দানে অধিকার আছে—এই ভাবে বিষয়ের বিভাগ করিয়া উভয়ের সঙ্কলন করা হইয়াছে। এখানে কোনও বাধাও নাই। সাপেক্ষত্ব নিরপেক্ষত্ব দ্বারা দানবিধির পৃথক্ প্রবৃত্তি হয় না ইহাই বাচ্য।

## 48. मूलम्

(25B) दानविधेर्नपृथक् प्रवृत्तिरिति वाच्यम्। न स्त्री दद्यात् प्रतिगृह्णीयाद्वेत्यस्य वैयर्थ्यात्। तथा च हारीतः-- दानार्थे वा धनार्थे वा धर्म्मार्थे वा विशेषतः। आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति। अनेन दानमात्रस्य प्रतिषेधेऽपि न स्त्री दद्यादित्यादिवत् पृथगुपादानम्। तत्र शुक्रशोणितयोः सम्भवस्य हेतुताया (? हेतुतया) अविशेषपदयो (रू) भयोः समत्वेन प्राप्तौ सार्थकम् (सार्थक्यम्) अन्यथापिष्टपेषणापत्तेः। एतच्च हारीतवचनम् आपदादीतरत्र बोद्धव्यं नारदैक्यात् स्त्रीकृतान्यप्रमाणानि कर्म्माण्याहुरनापदि। विशेषतो गृहक्षेत्रदानाधमनविक्रयाः॥ (नारदस्मृति, ऋणादान, 26)। इत्यत्रानापदीत्युक्तेः। तथा अस्वतन्त्राः स्त्रियः सर्व्वाः पुत्रा दासाः परिग्रहा इत्यभिधाय बाल आषोडशाद्वर्षात् पौगण्डश्चापि कथ्यते। परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते । जीवतोर्न स्वतन्त्रः स्याज्जरयाऽपि समन्वितः। (नारद, ऋणादान 34ab, 35 ed, 36)

दीप्तिः

(25b) एवञ्च दत्तकव्यापारे वहुस्मृतिवचनप्रामाण्यात् स्त्रीणां यदस्वातन्त्र्यं कथितं तद् अनापदि इति ज्ञेयम्। नारदीयवचनेऽपि स्त्रीकृतानां गृहक्षेत्रदानाधमनक्रियाणाम् अप्रामाण्यम्।

(25b ) for, in that case the statement : "women shall neither make gift of nor receive in gift (a son for adoption)" becomes useless. In the matters of gift, wealth, religious work specially, in matters of take over or make over—women have no right—in this statement of Hārita—although gift (=making over) in general is prohibited (for woman) women shall not give away ( a son)—in this statement—it has been separately mentioned).

In that context—since the mixture of semen and female generative fluid is the cause of birth (of a child)—the two words having been used without any discrimination—the equality of both (the father and the mother) having been arrived at (the above statements) hold good. Otherwise the whole exercise will be like pressing something that has already been pressed (ie. useless tantalogy).

**इत्यनेन कुलचारादितः स्त्रीप्रीत्या वा कुमार्यै वरेण तत् पित्रादिभिर्वा दत्तं (तस्या) पित्रादिभिर्मूल्यवुद्ध्या न गृहीतं तन्मूल्यं न भवति किन्तु पुजार्थमेव तदिति। याज्ञ–**

**दीप्ति**

(31b) विवाहकाले पारितोषिकरूपेण वस्त्रालङ्कारादिदाने ग्रहणे वा न दोषः। प्रसङ्गतः विवाहकाले कन्यायाः पिता शुल्कं न गृह्णीयादिति विशदयति मनुवचनेन। कालिकापुराणवचनेऽपि शुल्कनिर्यातनेन गृहीता या वनिता सा दासीभवतीति।

(31b) If garments and ornaments (and knick knacks) are given as presentations (like bridal shower, nuptial shower), there is no harm. If the boy or the girl be procured by payment, no special feature of a son (or a daughter) can be attributed to him (or her), for Manu has prohibited the sale of child in (the verse 3.51) "knowing the demerits of exacting bridal fee, father of a daughter shall not accept even the slightest bridal fee, while accepting that fee out of greed a man becomes vendor of own progeny.

*Vidvān* (in the above verse) means knowing ie. knowing the demerits of selling that (ie. the child)—since the seller becomes the seller of child, the *bandhus* ie. the relatives (of the bride) shall not accept even a small thing (as bridal fee).

In the *Kālikāpurāṇa* (we have) the female procured by payment of price for wife is called *dāsī* (female slave) and the son born in her is also considered a *dāsa* (slave) because such marriage is considered as *Āsura* form of marriage.

In the same context Manu elucidates (3.54)—where the kinsmen do not retain (for themselves) the bridal fee (but gives it away to the bride herself) there is no (question of) sale (of bride). By this and by family custom etc. or out of affection for wife where the fee is not retained by the father (of the bride) and others considering this as the price of the wife—the latter does not become the price but is considered as (something for) honouring the bride

**(31b) পারিতোষিক রূপে বস্ত্র অলংকারাদি দান করিলে কিন্তু তাহা দোষের হইবে না। মূল্য দ্বারা ক্রীত বা ক্রীতা শিশুর উপর সন্তানত্ব আরোপ করা যায় না।**

মনু (৩.৫১) "শুল্ক গ্রহণের দোষ জ্ঞাতা কন্যার পিতা কন্যাদাননিমিত্ত অণুপরিমাণ শুল্কও গ্রহণ করিবেন না। যেহেতু লোভবশত শুল্ক গ্রহণ করিলে অপত্য বিক্রয়কারী (বলিয়া পাপী) হইতে হয়—" এই স্থলে অপত্য বিক্রয় নিষিদ্ধ করিয়াছেন। শ্লোকের বিদ্বান্ শব্দের অর্থ অপত্য বিক্রয় জাতদোষকে জানেন যে বিক্রেতা যেহেতু অপত্য বিক্রয়কারী হন অতএব অল্প পরিমাণ শুল্কও বন্ধুগণ গ্রহণ করিবেন না।

কালিকাপুরাণে—বনিতার মূল্য দিয়া যাহাকে ক্রয় করা হয় সে স্ত্রীকে দাসী বলে, তাহাতে যে পুত্র হয় সেই পুত্রকে দাস এমন পুত্র বলা হয়—তাদৃশ বিবাহকে আসুর বিবাহও বলা হয় বলিয়া। (এ বিষয়ে) মনু বিশেষ করিয়া বলেন—(৩.৫৪) বরপক্ষীয়গণ প্রীতিপূর্বক যে ধন কন্যাকে দান করেন, সেই ধন কন্যার পিতা প্রভৃতি আপনজনেরা গ্রহণ না করিয়া যদি কন্যাকেই তাহা দান করেন তবে (সেক্ষেত্রে) বিক্রয় বলা হয় না যেহেতু তাহা কুমারীদের প্রতি, ঐধন, কৃপা প্রযুক্ত পূজোপহারমাত্র—(কুল্লুকটীকানুযায়ী বঙ্গানুবাদ)—ইত্যাদি বচনানুযায়ী কুলাচার প্রভৃতি কারণে অথবা স্ত্রীর প্রতি প্রীতি বশত: —কন্যার প্রতি বরের দ্বারা অথবা তাহার পিতা প্রভৃতির দ্বারা যাহা উপহার প্রদান করা হইয়াছে, কন্যার পিতা প্রভৃতি তাহাকে কন্যাশুল্ক ভাবিয়া তাহা গ্রহণ না করেন তবে সেই উপহার কন্যা মূল্য হয় না, কিন্তু কন্যার প্রতি পূজোপহার মাত্রই হয়।

## 61. मूलम्

**(32A) (याज्ञ)वल्क्येनापि "नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रय":[71] (yāg. III. 236ed)इत्यत्र निन्दितकर्म्मसु (सु) तत्वेन विक्रयो निषिद्धः। अत्र सुता च सुतश्चेत्यैकशेषः। तथात्रापि पारितोषिकमिति। ननु सामान्यं पुत्रदाराधि(दि)[71a] सर्व्वस्वन्यामयाचितम्। प्रतिश्रुतं तथान्यस्मै न देयं त्वष्टधास्मृतमिति बृहस्पतिना (वृहस्पतिस्मृति reconstracted, अदेयदेयदत्तानि Section, 14.2) पुत्रदानं निषिद्धम्। तत् कथं दत्तकार्थपुत्राय तद्दानं सङ्गच्छते, उच्यते। विक्रयश्चैव दानञ्च न देयाः सुरनिच्छवः। दाराः पुत्राश्च सर्व्वस्वमात्मन्येव तु यो भवेत्। आपत्काले तु कर्त्तव्यं दानं विक्रय एव च। अन्यथा न प्रवर्त्तेत इति**

71. For these upapātakas see Manu XI, 60-67 & Yāgñavalkya III. 234-243
71a. Printed Bṛhaspati has आदि for आधि V.L. 71b कात्यायन in दत्तकमीमांसा reads प्रकर्त्तव्यम् for प्रवर्त्तेत।

**शास्त्रविनिश्चयः[71b] (कात्यायनस्मृति सारोद्धार V.V. 638-39) इति वचनात् आपदि दानमभ्यनुज्ञातम्। सामान्यतोऽभिधानादत्रापि तदेवाभ्युपेयम्। परमत्र–**

**दीप्तिः**

(32a) याज्ञवल्क्यवचने यत् सुतानाञ्चैव विक्रयः इति दृष्टं तत्र सुतश्च सुताच इति तत् पाणिनि सूत्रेण (I. 2.67 पुमान् स्त्रिया इति) एकशेषवृत्तियोगात् सुतौ इति। तेन तत्र वचने कन्याया अपि ग्रहणम्। वृहस्पतिवचनेनापि पुत्रदानं सुतरां निषिद्धम् तर्हि कथं तत् सङ्गच्छते ? तत्रोत्तरं वक्ष्यति नेति।

(32a) Yājñavalkya also (in III. 236ed) enumerating in the list of prohibited works (causing *Upa-pātaka*) like *nāstikya* (atheism) cessation of observance of vows, sale of sons and daughters—has prohibited the sale of son and daughter. Here two words *suta* (=son, masculine) and *sutā* (=daughter, feminine) merge in Ekaśeṣa-vṛtti (cf. Pāṇini, I. 2.67 and give the form '*sutau*'). Here also *pāritoṣika* (ie. satisfaction causing presentation (ie. nothing is to be received as presentation/ gift by selling a son or daughter). Bṛhaspati (Smṛti Reconstructed, 14.2) has named eight items which are not to be parted with (by means of gulf and they are :) *common property, son, wife*, etc. pledge, whole of *one's own property, mortgaged goods, things sought* by others (or acquired by begging) and things promised to others and thereby has prohibited the gift of son. How, can then the act of gift of a son for adoption to a sonless man be justified? (the reply is as follows): The sale or gift of wife, of own son or entire property should not be done reluctantly (unwillingly), however, in exigency gift or sale (of these) may be done. Otherwise the gift or sale of these should not be resorted to—this is the decision of the scriptures (as found in katayana). By such decision in times of emergency the gift (of son) is allowed. From this general statement the same step may be followed in the relevant issue also. But here—

71b. printed कात्यायन स्मृति सारोद्धार has विक्रयं चैव दानञ्चःन देयास्युरनिच्छवः, दाराः पुत्राश्च सर्वस्वमात्मनैव तु योजयेत्। आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा। अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चय॥ V.V. 638-639.

(32a) যাজ্ঞবল্ক্যও (III. 236 cd) নাস্তিক্য (অর্থাৎ বেদ নিন্দা, ঈশ্বর-পরলোক নাস্তিত্ব প্রচার) ব্রতলোপ বিধান, ও পুত্রকন্যা বিক্রয় ইত্যাদি নিন্দিত কর্মের (বা উপপাতকের) মধ্যে পরিগণনা করিয়া তাহাতে পুত্র কন্যার বিক্রয় নিষিদ্ধ করিয়াছেন। এখানে সুত ও সুতা এই দুই পদের একশেষ বৃত্তি সেখানেও পারিতোষিক (গ্রাহ্য নয়)।।

বৃহস্পতি-অদেয় (দানযোগ্য নয়) এমন আট প্রকার বস্তুর নাম করিয়াছেন যথা সামান্য (সর্বসাধারণের বস্তু), পুত্র, স্ত্রী আদি, সর্বস্ব, ন্যায়, যাচিত ও অন্যের নিকট দিব বলিয়া প্রতিশ্রুত এমন বস্তু। ইহাতে তিনি পুত্রদান নিষিদ্ধ করিয়াছেন। তাই অপুত্রক ব্যক্তির নিকটে দত্তককরণের জন্য পুত্রদান কতদূর সঙ্গত? উত্তরে বলা হইতেছে—বিক্রয় ও দান অনিচ্ছায় করা যাইবে না, (বিশেষত:) পত্নী, সর্বস্ব ও আত্মজ পুত্র। আপৎকালে কিন্তু দানও বিক্রয় করা যায়। অন্য সময়ে এই সবের দান ও বিক্রয়ে প্রবৃত্ত হইবে না ইহাই শাস্ত্র সিদ্ধান্ত (কাত্যায়ন মত)। এই বচন বলে (দত্তক-গ্রাহকের পুত্রাভাবরূপ) বিপদে (পুত্র) দান স্বীকৃত হইয়াছে। সাধারণভাবে কথিত এই বচন হইতে— প্রাসঙ্গিক ক্ষেত্রে তাহাই স্বীকার্য। কিন্তু এখানে—

## 62. মূলম্

**(32B) पुत्रादौ दानपदं गौणं सर्वस्वदानन्तु अनु (दिशति?) न देयमिति प्रपञ्चितं व्यवहारतिलके।। अथ दत्तकस्य प्रतियोग्यनुर्योगतया शौचादि निरूपणम्।। तत्र त्रिरात्रानुवृत्तौ विष्णु:-- अनौरसेषु पुत्रेषु स्वभार्यास्वन्यगासु चेति। तथा परपूर्व्वासु भार्य्यासु पुत्रेषु कृतकेषु च। त्रिरात्रं स्यात्तथाचार्य्यस्वभार्य्या स्वन्यगासु[72] च (cf. विष्णु XXII, 42-43)। तथा ब्रह्मपुराणम्—दत्तकश्च स्वयंदत्तक: (दत्त:) कृत्रिम: क्रीत एव च। अपविद्धाश्च ये पुत्रा भरणीया: सदैव ते। भिन्नगोत्रा: पृथकपिण्डा: पृथग्वंशकरा: स्मृता:। जनने मरणे चैव त्र्यहाशौचस्य भागिन:।**

---

72. अत्र याज्ञवल्क्य (III.25)—अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च। निवासराजनि प्रेते तदह: शुद्धिकारणम्॥
उशन (6.30) गृहे मृतासुदत्तासु कन्यकासु त्र्यहं पितु:। परपूर्वासुभार्यासु पुत्रेषु कुलजेषु च॥ इति
शंखस्मृति (15.13) अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च। परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते॥

**एतेषु औरसातिरिक्तपुत्रेषु जातेषु मृतेषु च त्रिरात्रम्। तथा औरसं वर्जयित्वा तु सर्व्व वर्णेषु सर्व्वशः। क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च। अशौचं तु त्रिरात्रं स्यात्–**

**दीप्तिः**

(32b) उच्यते दानपदमत्रगौणम्। एतच्चिन्त्यम् कथं गौणम्? दानशब्दस्य मुख्यार्थस्तु स्वस्वत्वध्वंसपुर्वक परस्वत्वोत्पादनरूपः। स च कायेन मनसा वाचा दात्रा एव करणीयः। एतच्च मिताक्षरादितः स्पष्टं ज्ञायते। दाता यदापदि प्रतिकर्त्तुमक्षमः सन् पुत्रं ददाति तदा कायेन वाचा ददत्यपि मानसं क्लेशमनुभवति इति दानशब्दस्य मुख्यार्थस्तत्र न प्रसज्यते। अतस्तत्र दानपदं गौणम्। तार्किकास्तु दानकर्मणः भूमि हिरण्यादिषु अचेतनेषु विषयेषु प्रसक्तिं पश्यन्ति। गवादिषु पुत्रादिषु च चेतनवत्सु प्राणिषु दत्तेषु दत्तानांमानसक्लेशोत्पादात् दानं तत्र गौणम्। यथा नृपराज प्रदत्तानामपि गवां दानात् परमपि पूर्वस्वामिगृहप्रत्यावर्त्तनवार्त्ता पुराणेषु दृश्यते। अतः इयं मे माता, अयं मे पिता इति ज्ञानोदयात् प्रागेव पुत्रदानं करणीयमिति निपुणाः। व्यवहार तिलकनामकस्य भवदेवकृतग्रन्थस्य, यस्य उत्तरभागोऽयं दत्तकतिलकः, तस्य मूलग्रन्थस्य असुलभतया नैष विषयः सर्वस्वदानरूपः सम्यक् चर्चयितुं शक्यते॥ अधुना विषयान्तरमाह दत्तकस्य अशौचनिरूपणम्। यस्याभावः स प्रतियोगी। यथा धटाभावप्रतियोगी धठ एव। किञ्च येन सम्बन्धेन कश्चित् कुत्रापि तिष्ठति–स तस्य सम्बन्धस्य प्रतियोगी। दत्तकपुत्रः दत्तकत्वसम्वन्धेन दत्तकग्राहके पितरि युज्यते। अतो दत्तकत्वसम्बन्धस्य प्रतियोगी दत्तकपुत्र एव। संक्षेपेण यस्य सम्बन्धः स प्रतियोगी। किञ्च अभावो यत्र अनुभूयते स एव अनुयोगी। धटाभावस्य भूतलम् अनुयोगि। तेन यस्मिन् सम्बन्धः स अनुयोगी फलतः दत्तकादेर्जनने मरणे वा दत्तकग्राहकपित्रादीनां कीदृशी आशोचव्यवस्था किञ्च दत्तकग्राहकमरणे दत्तकपुत्रस्य कथम् अशौचम् इत्यर्थ एव आयाति। विष्णुस्मृतिब्रह्मपुराणवचनयोः औरसेतरपुत्रेषु जातेषु मृतेषु त्रिरात्रमशौचं प्रतिग्रहीतृकुले। जनककुले तु नाशौचम्। तत्र स्वभार्या अथमन्यथा भवेत् इति चेत् क्षेत्रजपुत्रलाभार्थमन्यस्मै नियुज्यते चेत् सापि अन्यगा भवति। मनूक्त (5/161) अपत्यलोभाद् या स्त्री भर्तारमतिवर्त्तते इत्याद्यपि प्रमाणम्। याज्ञवल्क्योक्तं (III. 25) अनौरसेषु पुत्रेषु इत्यादिवचने प्रतिलोमभिन्नं पतिव्यतिरिक्तं पुरुषम् आश्रित्य वसन्त्याः स्त्रियः मरणे अहोरात्रमशौचम्, न च सपिण्डतानिबन्धनं पूर्णाशौचम् परपूर्वापदेन पूनर्भू-दिधिषु-कुण्ड-गोल-मातुश्च परिग्रहः इत्यपि वक्तुं शक्यते। तत्र विष्णुधर्मसूत्रव्याख्यायां नन्दपण्डितः–परः पूर्वः पतिः पिता च ययोस्तौ भार्यापुत्रौ।

परपूर्वेत्यन्याश्रितायाः स्वभार्याया अप्युपलक्षणम्। अन्याश्रितेषु दारेषु परपत्नीसुतेषु च गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत् पिता। इति प्रजापतिस्मरणात्।

(32b) The word *dāna* with reference to the son etc. is to be taken in a secondary sense. While directing (ie. discussing) *sarvasvadāna* (gift of the entire property/possession) it has been clarified in the *Vy ıvahāratilaka* that it is not to be given.

Now is discussed the impurity of an adopted son when he is considered a *pratiyogin* [something is the *pratiyogin* of the relationship in which it is related to an other. The adopted son is *pratiyogin* of the relation of adoption or *dattakatva sambandha* by which he is related to his adoptive father] or an *anuyogin* or the substratum on which such relationship stands (here, the adoptive father the whole thing comes to mean the impurity to the adopted son or to the adoptive father be on the death of the latter or on that of the former).

On this matter, in the context of impurity for *trirātra* (literally three nights but conventionally three days), *Viṣṇu dharmasūtra* (XXIL. 42-43) has : "Impurity for three days is to be observed on the demise of secondary sons, (own) wife (but) appointed to another (for levirate), wife formerly belonging to another and unnatural sons (like dattaka etc." *Brahmapurāṇa* (has) : (The sons known as) *dattaka, svayanadatta, kṛtima, krīta* and *apaviddha* are to be maintained by all means. They come from different *gotra*, they offer *piṇḍas* to different persons (as the case may be) and they create separate families. For them impurity caused by birth or death has been limited to three days.

In these statements three nights (or three days) impurity is prescribed when sons other than the natural one, are born or expired. Moreover in all castes, excepting the natural son, if other types of sons like *kṣetraja* etc. are born or when they die—the impurity to the father loc of the same caste is surely for three nights *(trirātra)*.

(32b) পুত্রাদি বিষয়ে দান পদটি গৌণ অর্থে ব্যবহৃত। সর্বস্বদানের কথা প্রসঙ্গে 'দেওয়া উচিত নয়', এইরূপ বিশদ করা হইয়াছে ব্যবহার তিলক গ্রন্থে। এখন দত্তকের প্রতিযোগিত্ব ও অনুযোগিত্ব বিচার করিয়া শৌচ প্রভৃতি নিরূপণ করা হইতেছে যাহার সম্বন্ধ সে প্রতিযোগী, যাহাতে সম্বন্ধ সে অনুযোগী—ইহাই সংক্ষেপ টীকাতে বিস্তৃত

দত্তকের মৃত্যুতে তাহার পিত্রাদির ও পিত্রাদির মৃত্যুতে দত্তকের অশৌচের কথা বলা হইতেছে।

এ বিষয়ে ত্রিরাত্র (পরিমিত অশৌচ পালনীয়) এই অনুবৃত্তিতে বিষ্ণুধর্ম সূত্রে (XXII.42-43) –অনৌরস পুত্র, অন্যগামিনী নিজ স্ত্রী, পরপূর্বা ভার্যা ও (দত্তকাদি) কৃত্রিম পুত্রের মরণে ত্রিরাত্র অশৌচ হইবে এবং তাহাই আচার্য ও অন্যান্য ভার্যার মরণে বিহিত অশৌচ ব্রহ্ম পুরাণে—দত্তক, স্বয়ংদত্ত, কৃত্রিম, ক্রীত ও অপবিদ্ধ সংজ্ঞক পুত্রেরা সর্বদা ভরণ পোষণ যোগ্য। তাহারা ভিন্ন গোত্রের, পৃথক্ পিণ্ডের ও পৃথক বংশ সৃষ্টিকারী বলিয়া পরিগণিত। তাহাদের জন্য ত্রিরাত্র জননাশৌচ ও মরণাশৌচ বিহিত। এই বচনগুলিতে ঔরস ভিন্ন অন্য পুত্রদের জন্ম বা মরণ জনিত অশৌচ ত্রিরাত্র।

সকল বর্ণেই ঔরসভিন্ন ক্ষেত্রজাদি পুত্র জন্মাইলে বা মরিলে সবর্ণ দত্তক গ্রাহক পিত্রাদির ও দত্তক পুত্রদের ত্রিরাত্র অশৌচ ইহা নিশ্চিত।

## 63. मूलम्

**(33A) समानामिति निश्चय इति। समानां सवर्णानाम्। तथा हारीतः। सवर्णेष्वौरसेषु पुत्रेषु सवर्णासु परपूर्वासु भार्य्यासु सर्व्ववर्णानां त्र्यहमिति। अत्र भार्य्यापुत्रपदयोः सम्बन्धिपदतया यत् प्रतियोगिकमेव भार्य्यात्वं पुत्रत्वञ्च तस्यैवेदमिति। अतएव क्षेत्रजादिषु एकादशसु पुत्रेषु जातेषु मृतेषु च मातापित्रोस्त्रिरात्रं क्षेत्रजादीनामपि मातापितृमरणे त्रिरात्रं, परपूर्व्वासु भार्य्यासु अन्यगासु अनौरसेषु पुत्रेषु च यत् प्रतियोगिकं भार्य्यात्वं पुत्रत्वञ्च तस्यैव त्र्यहाशौचं नान्येषां, भार्य्यापुत्रपदयोः सम्बन्धित्वादिति[73]–**

**ननु तर्हि पितापुत्रयोरेवाशौचविधानात् तदन्येषामशौचमेव माभूदिति चेत् पूर्व्वोक्त मनुबौधायन कालिकापुराणादिषु दत्तकस्यापि गोत्रभागित्वेनोक्तेर्बन्धु पदाभि**

**दीप्तिः**

(33a) वहुविधदत्तकग्रन्थान् सङ्कलय्य सम्पादिते दत्तकशिरोमणिग्रन्थे संक्षेपेण इयम् अशौचव्यवस्था प्रतिपादिता। असगोत्रसपिण्डकदत्तकादिमरणे यथासम्भवं जनने

73. अतएव रुद्रधरः क्षेत्रजादिषु.....सम्बन्धित्यादइत्याह। रुद्रधरस्य नामसन्निवेशनमत्र प्रक्षिप्तम्- अतोऽस्माभिः परित्यक्तम्। आलोचना द्रष्टव्या उपोद्घाते– मूलस्य (पृः 13b) टीकापि अत्र द्रष्टव्या।

वा अर्थात् तत्पुत्रस्य जनने परस्परं जनककूलेनाशौचम्। दत्तकमरणे तत् पुत्रपौत्रयोर्वा जनने प्रतिग्रहीतृ तत् पितृपितामहानां त्रिरात्रमशौचम्। तेषां तन्मरणे तत्पुत्रादीनां जनने मरणे वा दत्तकस्य तदेवाशौचं, प्रतिग्रहीतुः प्रपितामहादीनां सकुल्यानां दशमपुरुषपर्यन्तानां एकाहः सोदकसगोत्रयोः स्नानमात्रम्। तेषां मरणे यथासम्भवं जनने च तदेवाशौचम्। प्रतिग्रहीतुः क्रियाकरणे दत्तकस्य दशरात्रमन्यथा त्रिरात्रम्। सपिण्डसगोत्र दत्तकस्थले पूर्ववदशौचव्यवस्था। सामान्येन अयमाशयः दत्तकमीमांसासम्मतः। दत्तकादीनां जननमरणे त्रिपुरूषपिण्डानां त्र्यहाशौचम्, एतच्चासपिण्डदत्तकस्य। ब्रह्मपुराणवचने भिन्नगोत्रा इति, पृथकपिण्डा इत्यादि प्रयोगस्य सार्थक्यात्। तत्राकांङ्क्षानुदयेन सामान्यसापिण्ड्यप्रयुक्तदशाहाशौचाबाधे हेतोरभावात्। दत्तकपुत्रस्य जननादौ तत्स्त्रिया वा मरणे दशाहाशौचमेव, तत्र दत्तकत्वनिबन्धनसापिण्ड्याभावादिति दत्तकचन्द्रिका।-- दत्तकस्य पित्रादिमरणे सपिण्डजनने च त्रिरात्राशौचं ब्रह्मपुराणात्। एतत्तु असपिण्डदत्तकविषयं सपिण्डविषये पूर्ववदशौचव्यवस्था इति दत्तकनिर्णये।-- भवदेवीयग्रन्थे दत्तकतिलकेतु दत्तकस्य पुत्रस्य मरणे सपिण्डानां त्रिरात्रं सकूल्यानामशौचाभावः एवं प्रतिग्रहीत्रादि सपिण्डमरणे तत् सुतादेश्च त्रिरात्रं सकुल्यादीनां मरणे अशौचाभावः एवं जनने ज्ञाति पुत्रादीनां सपिण्डजननमरणयोः न त्रिरात्रम् अपितु स्वजात्युक्तमशौचम्, ग्रहीतुः मरणे दत्तकस्य न देहाशुद्धिः किन्तु तत्रापि जनकजनन्योर्मरणे सति सा इति। सपिण्ड सगोत्रसोदकश्चेद्दत्तकस्तदा पूर्वाशौचेन (पूर्णाशौचेन) शुद्धिः असगोत्रोऽसपिण्डश्चेत्तदा पित्रो स्त्रिरात्रमेवाशौचं न दशाहादि। पितृसपिण्डानाम् एकाहः। जनके मृते वैदिक सम्वन्धात् त्रिरात्रमेवाशौचं, ग्रहीतरिमृते दशाहादि एवेति दत्तकदर्पणे। दत्तककौमुदी—न किञ्चिदाह। दत्तकदीधितौ—च—दत्तकपुत्रस्य जननमरणयोः पूर्वापरपित्रोस्त्रिरात्रं सपिण्डानामेकाहः। एतच्चाशौचम् असपिण्डदत्तादीनाम्। सपिण्डदत्तकस्य दशाहादि एवाशौचम्। सकुल्यानामेकाहः, सोदकसगोत्रयोः स्नानमात्रम्। असपिण्डदत्तकस्यमरणे ग्रहीतुस्त्रिरात्रमेवाशौचं, जनकस्य ग्रहीतृसपिण्डानां (च) एकाहः। प्रतिग्रहीतृकुलीनानान्तु स्नानमात्रं सपिण्डदत्तकश्चेत् तदा पूर्ववद्दशाहाशौचमिति दत्तसिद्धान्तमञ्जरीमतम्।—एवं गच्छत्सु कालेषु निबन्धकाराणामपि चिन्तासरणौ महद्वैषम्यं समजनि।

(33a) In the above statements the word '*Samānām*' means 'of persons belonging to the same caste'. Hārita also says—"In all castes (impurity caused by death) of secondary sons of the same caste, wives of the same caste that were formerly others' spouse (like *punarbhū*, *didhiṣū* etc., is for three days.

In this statement, since the words *bhāryā* and *putra* indicate relations, the impurity clings to those persons only with whom the relation of wife or son stands.

Therefore it has been stated when eleven types of sons as *kṣetraja* etc. are born, or when they die the (secondary) parents are to observe impurity for '*trirātra*' and when such parents die, *kṣetraja* and others will observe impurity for three days. In the case of '*parapūrvā bhāryā*', '*anyagā bhāryā*' and '*anaurasa* son'–since the words *bhāryā* and *putra* indicate relation–the impurity of three days attacts to persons with whom the relation of wife or son rests and not to others.

In that case, if one objects that since impurity of the father and the son (in the case of adoption) has been enjoined, let other relations be free from this impurity (due to death), the reply is as follows : In the statements of Manu, Baudhāyana, *Kālikāpurāṇa* etc., the dattaka son has also been taken as belonging them gotra (of the adoptive father) and therefore recognised as *bandhus;* hence the cognates *(sapiṇḍas)* also are to observe impurity for three days

(33a) (উক্ত বচনে) 'সমানাম্' পদের অর্থ সবর্ণদের। হারীত বলিয়াছেন—ব্রাহ্মণাদি সকলবর্ণের ক্ষেত্রেই সবর্ণ অনৌরস পুত্রদের, সবর্ণা পরপূর্বা ভার্যাদের (মরণে) ত্র্যহাশৌচ (তিনদিনের অশৌচ)। এই বচনে ভার্যা ও পুত্রপদটি সম্বন্ধ জ্ঞাপক পদ বলিয়া ভার্যাত্ব সম্বন্ধ, পুত্রত্ব সম্বন্ধ যাহার সহিত আছে—সেই ব্যক্তিরই এই অশৌচ। তাই বলা হইয়াছে ক্ষেত্রজ প্রভৃতি একাদশবিধ পুত্র জন্মাইলে অথবা মরিলে (গ্রাহক) মাতা পিতার ত্রিরাত্র অশৌচ ক্ষেত্রজাদিরও (তাদৃশ) মাতাপিতার মরণে ত্রিরাত্র অশৌচ। পরপূর্বা ভার্যা, অন্যগা স্ত্রী, অনৌরস পুত্র এই সকল ক্ষেত্রে ভার্যা ও পুত্র পদটি সম্বন্ধী পদ হওয়ায় যাহার সহিত সম্বন্ধ থাকায় তাহারা স্ত্রী বা পুত্ররূপে গৃহীত—সেই ব্যক্তিরই ত্র্যহাশৌচ হয়, অন্যের নয়।

তাহা হইলে কেবল মাত্র (দত্তকগ্রাহক) পিতা (ও মাতার) ও (দত্তক) পুত্রেরই কেবল মাত্র অশৌচবিহিত হওয়ায় অন্যদের (অর্থাৎ জ্ঞাতিদের) অশৌচ হইবে না এইরূপ বলিলে (উত্তর এইরপ)—পূর্বোক্ত মনু, বৌধায়ন, কালিকাপুরাণ প্রভৃতিতে দত্তক ও গোত্র ভাগী হয় এই বচনবশত: তাহারাও বন্ধু পদ বাচ্য হওয়ায় (তাদৃশ) সপিণ্ডদের অশৌচ ত্রিরাত্রই হইবে।

## 64. मूलम्

**(33B) धानाच्च सपिण्डानामशौचं त्रिरात्रमेव भविष्यति। दत्तकस्य पुत्रे जाते दत्तकस्य सम्पूर्णं, पुत्रस्य च तन्मरणे सम्पूर्णमन्येषां पत्नी सपिण्डानाञ्च तथेति सपिण्डत्वात्। केचित्तु स्वगोत्रदत्तके अशौचं पूर्णमाहुस्तदतीव मन्दं वाचनिकेऽर्थे न्यायानवतारात्। अथ पितृमरणे दत्तकस्य सम्वत्सरमौरसवत् न देहाशुद्धिः। देहाशुद्धि प्रयोजकतादृशसम्बन्धाभावात्। सम्बन्धश्च जनकत्वनिबन्धनो धर्म्माधर्म्मयोरेकत्व-निबन्धनदेहैक्यञ्च। तत्राद्यस्त्वौरस पत्नी निष्ठोऽपरश्च वाचनिकः। औरसस्य हि प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं न वा पैत्र्यं यावत् पूण न वत्सरः।। तथा–महागुरुनिपाते तु काम्यं किञ्चिन्नचाचरेत्। आत्विर्ज्यं ब्रह्मचर्य्यं च श्राद्धं देवयुतञ्च यत्। तथा अन्यश्राद्धं परान्नञ्चगन्धं माल्यञ्च मैथुनम्।**

**दीप्तिः**

(33b) शास्त्रवचने प्राप्तेऽपि युक्त्या तद्विश्लषणं कृत्वा वचनपालनं कर्त्तव्यम्। उक्तञ्च-केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः। युक्तिहीनविचारेतु धर्म्महानिः प्रजायते।। इति। अत्र युक्तिर्वा न्यायो वा अयमेव। पूर्णाशौचं हि वैदिक सम्बन्धप्रयुक्तम्। अन्यत्र न तस्यावयवः इति। दत्तकमीमांसाकारस्तु अन्यथा मनुते स्म।

(33b) When the adopted son begets his son, he observes full length impurity (caused by birth, according to his caste) and when he dies his son and the wife (of the deceased) observe full impurity (due to death) and cognates also because of their cognate hood some say that impurity for the complete prescribed period is to be observed when the (adoptive) father and (adopted) son belong to the same gotra. That is very bad for that avoids logic in (interpreting verbal) statements.

Now in the death of the (adoptive) father, the adopted son, like natural son, will not observe impurity of the body for one year. For, in that case the relationship that produces bodily impurity is absent. And that *sambandha* (relationship) is contingent on the relation of the father (and son) and on unity of *dharma* and *adharma* (i.e. *adṛṣṭa*) and the unity of body. The former ie. in the case of natural son it is dependent

upon wife (ie. the mother jointly with whom the son is produced) and the other is verbally made (—'give me my son', 'you are my son' etc). In the case of natural sons (it is said) : whose parents have expired, such persons get their body stained or impure. So long as one full year has not passed (from the time of death of such parents) no work relating to the divinities (ie. rituals), no work relating to the manes (ie. *tarpaṇa, śrāddha* etc.) (is prescribed). And—in the event of death of a *mahāguru* (ie. parents) no *kāmya* work (non-obligatory ritual done for getting a desired result) is to be performed such as priestly duty, the duties of a brahmacarin, *devaśrāddha*, (ordinary) *śrāddha* for others, eating food offered by others, using unguents (or cosmetcs), garlands and sexual activity (all these are prohibited for one year).

(33b) পুত্র জন্মাইলে (যে পিতা হইল এমন) দত্তকপুত্রের সম্পূর্ণ অশৌচ এবং তাহার মরণ হইলে তাহার পুত্রের সম্পূর্ণ অশৌচ। পত্নীর ও সপিণ্ডদেরও তাহাই কারণ তাহারা সপিণ্ড। কেহ কেহ বলেন যে দত্তকপুত্র যদি সমান গোত্র (হইতে গৃহীত) হয় তখনই (মরণনিমিত্তক) পূর্ণাশৌচ পালনীয়। বাচনিক বিষয়ের (ব্যাখ্যার) মধ্যে যুক্তি অবতারণা না করায় তাহা অতিশয় মন্দ।

দত্তক পিতার মরণে দত্তকপুত্রের, ঔরস পুত্রের যেমন বর্ষব্যাপী দেহাশুদ্ধি হয়, তদ্রূপ হয় না। কারণ দেহাশুদ্ধির কারণ যে পিতাপুত্র সম্বন্ধ তাহা দত্তকগ্রাহক ও দত্তকপুত্রের মধ্যে থাকে না। এবং এই সম্বন্ধ হইল পিতৃত্বজনিত, ধর্মাধর্ম বা অদৃষ্টের একতা জনিত ও দেহৈক্য। উভয় প্রকারের মধ্যে প্রথমটি অর্থাৎ ঔরস সম্বন্ধটি পত্নী সংযোগ বশতঃ (ঘটে)। অন্যটি অর্থাৎ দত্তকে যে সম্বন্ধ থাকে তাহা কেবলমাত্র বাচনিক। ঔরস পুত্রের বিষয়ে বলা হইয়াছে—যাহার পিতা-মাতার মৃত্যু হইয়াছে। তাহার দেহ অশুচি হয়। যতদিন না একবৎসর পূর্ণ হয় ততদিন দৈবকর্মে পৈত্র্য কর্মে তাহার অধিকার হয় না। এবং মহাগুরু (পিতা মাতা)র মৃত্যু হইলে যতদিনে এক বৎসর পূর্ণ না হয় ততদিন কোনও কাম্য কর্ম করিবে না (যথা) পৌরোহিত্য ব্রহ্মচারী ধর্ম, শ্রাদ্ধ, দেবশ্রাদ্ধ, অন্যের শ্রাদ্ধ, পরান্নভোজন, চন্দন মাল্যধারণ, স্ত্রীসহবাস—

## 65. মূলম্

**(34A) বর্জযেত্ গুরুপাতেষু যাবত্ পুর্ণো ন বত্সরঃ। তথা মহাগুরুনিপাতে তু সর্ব্বকর্ম্মাণি বর্জযেত্। বিহায প্রেতকার্যঞ্চ সন্ধ্যোপাসনমেব চ। তথা-পিতর্য্যুপরধে**

**पुत्रो मातृश्राद्धान्निवर्त्तते। मातर्य्यपि च वृत्तायां पितृश्राद्दादृते समाम्।। तथा-तीर्थयात्रां विवाहञ्च स्वाध्यायञ्चान्यतर्पणम्। संवतसरं न कुर्व्वीत महागुरुनिपातने तस्यायमर्थः-पितराविति मातापितरौ, पितरौ, मातरः पितरौ च तौ गर्भजनयित्र्यौ इति शक्तिग्राहककोषोक्त जनयित्री पदेन जनक जनन्योरेव शक्तिग्रहात्- "सकृत्श्रुतो हि शब्दः सकृदर्थं गमयति।" सम्भवति मुख्यत्वे गौणत्वानुपपत्तेः, लक्षणाया वीजाभावाच्च पितृपदं जनकजननीपरम्। न च पितृपदं शात्तभात्तोभयपरं युगपत् शक्तिग्रहे मानाभावात्। दैवं पैत्र्यं प्रेतश्राद्ध पितृ-**

**दीप्तिः**

(34a) पितुर्मातुर्वा मरणे वत्सरपर्यन्तं देहाशुद्धिः पालनीया। तत्र मासिकश्राद्धादारभ्य वात्सरिकं सपिण्डीकरणं समाप्य कर्त्ता देहाशुद्धेः मुच्यते। एतन्मध्यवर्त्तिनि काले नैके विषयास्तेषां समाचरणीयास्तेषां सारणी च प्रदत्ता। उद्धृतेषु वचनेषु पितरौ पदस्य योऽर्थः स एव विचार्यते। 'पितामात्रा' (Pā I. 2.70) इति पाणिनीयैकशेषसूत्रेण मातापितरौ, पितरौ, मातरपितरौ इत्याद्यनेकं रूपं सम्भवति। अर्थश्च पिता माता च। कथमेकस्मात् पितृपदात् पितुः मातुश्च ग्रहणं, जाग्रति नियमे सकृदुच्चरितः शब्दः सकृदर्थं गमयति इति नात्र लक्षणावृत्तिः। यत्र तत्र लक्षणा न प्रसज्यते। मुख्यार्थस्य बाधो यत्र भवति तत्रैव तद्युक्तोऽपरः कश्चिदर्थो रुढ़िवशात् प्रयोजनवशाद् वायाति स च लक्षणार्थः। अतः लक्षणा हि अर्पिता शक्तिः। सा च अभिधातो जधन्या वृत्तिः। यत्राभिधेयार्थो युज्यते तत्र लक्षणार्थकल्पनमनुचितम्। किञ्च एकस्मिन्नेव पदे युगपद् अभिधेयार्थ-लक्षणार्थकल्पनमपि न युक्तम्। न चायं जहदजहत् स्वार्थलक्षणाविषयः। शक्तिग्रहश्च वहुभिरुपायैः सम्भवति। उक्तञ्च-शक्तिग्रहं व्याकरणोपमानकोषाप्त वाक्याद्व्यवहारतश्च। वाक्यस्यकोषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।। इति।। पितरौ अर्थात् मातापितरौ-तातजनयित्र्यौ। अत्र कोषवाक्यादेव ज्ञायते-यद् जनयित्रीपदेन जनकजनन्योरुभयोरेव ग्रहणम्।।

(34a) Such works are to be avoided in the event of death of the parent/parents for one year (from the day of death). Also—in the death of *mahāguru* (ie. parents) all sorts of (non-obligatory) work are to be avoided excepting the works to be done in connection with the departed (ie. the different *śrāddhas*) and offering daily prayers in time. Also when the father dies the son desists from offering *śrāddha* to the

(departed) mother (during the period of impurity) and when the mother also dies he desists from all works except *śrāddha* to the father for one year. Also, in the event of death of *mahāguru*—pilgrimage, marriage, recital of one own Vedic text branch, offering śrāddha to another should be done for one year. The purport of these as follows : for *pitarau* we have these words—*mātāpitarau, pitarau, mātaraḥ, pitarau*—ie. *tāta janayitrau*. Here according to lexicons giving meaning—janayitrī means both father and mother. (Now) according to the maxims, 'one word (uttered once) heard once is expressive of its meaning once only, where principal meaning is possible secondary sense is not applicable, for lack of the seed of *lakṣaṇā*, the word pitṛ is to be taken principally meaning both the father and the mother. Nor can we say that the word *pitṛ* will have both the primary and secondary meanings simultaneously for want of a supporting evidence.

*Daivam* and *Paitryam* mean *śrāddhas* other than the *preta śrāddha* and *pitṛ matṛ śrāddha*.

(34a) ইত্যাদি কার্য পিতা মাতার মৃত্যুর একবৎসরের মধ্যে করিবে না। মহাগুরু নিপাতে (অর্থাৎ জনক জননীর মৃত্যুতে) কেবলমাত্র প্রেতকার্য ও সন্ধ্যোপাসনা ব্যতীত সকল প্রকার কর্ম বর্জন করিবে। পুনশ্চ—পিতার মৃত্যু হইলে পুত্র মাতৃশ্রাদ্ধ হইতে বিরত হয় একবৎসরকাল। অনুরূপভাবে মাতার মৃত্যু হইলেও পিতার শ্রাদ্ধ ভিন্ন অন্যকর্ম হইতে বৎসরকাল বিরত থাকে। পুনরায়, তীর্থযাত্রা—বিবাহ, স্বাধ্যায়, অন্যের তর্পণ মহাগুরুর নিপাত হইলে একবৎসর করিবে না। ইহার এই অর্থ— পিতরৌ অর্থাৎ মাতা পিতরৌ বা পিতরৌ, মাতরা পিতরৌ....তাহারা দুইজন হইল জনক ও জননী। অর্থ প্রকাশক কোষগ্রন্থে জনয়িত্রী পদের অর্থ জনকজননী দুই জনকেই বোঝান হওয়ায়, একবার শ্রুত (উচ্চরিত) পদ একবারই অর্থ বুঝাইয়া দেয় মুখ্যার্থ সম্ভব হইলে গৌণার্থ গ্রাহ্য নয় বলিয়া, লক্ষণার বীজের অভাব বশত: (এখানে দোষ অনুযায়ী) পিতৃপদের দ্বারা জনক জননী দুইজনের গ্রহণ। পিতৃপদ এখানে মুখ্যার্থ ও গৌণার্থ যুগপৎ উভয় অর্থে গৃহীত ইহা(ও) বলা যায় না—সাধক প্রমাণ না থাকায়। দৈব ও পৈত্র্য শব্দের অর্থ প্রেতশ্রাদ্ধ, পিতৃমাতৃশ্রাদ্ধাতিরিক্ত অন্য শ্রাদ্ধ—

## 66. मूलम्

**(34B) मातृश्राद्धातिरिक्तम्। महागुरुनिपातेत्विति। त्रयः पुरुषस्याति-गुरवोभवन्तिमाता पिता चाचार्य्यश्चेतिवचनलब्धं (विष्णुधर्मसुत्र, 31.1) महागुरुपदम्। पतिरेको गुरुः स्त्रीणामित्येकपदेन च मुख्योगुरुः पतिरेव लब्धः। तथा धर्म्माधर्म्मयोरेकत्वञ्च "आम्नाये स्मृतितन्त्रे च लोकाचारे च धर्म्मतः[74] । शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा।" इति वचनात् न खलु दत्तकस्य महागुरुर्ग्रहीता भवितुमर्हति देहसम्बन्धाभावात् मानाभावाच्च। अतएव जन्महेतु हि पितरौ पूजनीयौ प्रयत्नत इत्यत्र जन्महेतुत्वेनैव पूज्यत्वमुक्तम्। तथा-उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिते[75] त्यत्राप्युत्पादकतयैव गौरवमुक्तं न तु ग्राहकत्वेनेति। न चाचार्य्यस्यातिगुरुत्वेऽपि तन्मरणे देहाशुद्धिर्देहसम्बन्धाभावात्। ननु दत्तायाश्चापि दुहितुर्जननकर्त्तृत्वाविशेषवञ्जनकयोर्मरणे देहाशुद्धिरास्ताम्। न खलु कन्याया दानेनैव जनकत्व--**

**दीप्तिः**

(34b) अधुना महागुरुपदस्यव्याख्यानप्रसंगे विष्णुधर्मसूत्रमुद्धृत्य पुरुषाणामति-गुरुनिरूपणं विदधाति। ते च जननी—जनकाचार्याः। स्त्रीजनस्य च मुख्यो गुरुः पतिरेव उद्धृते वचने एकशब्दस्य तादृगर्थकत्वात्। यत्तूक्तं सम्वन्धश्च धर्माधर्मयोरेकत्व निबन्धनः पत्नीनिष्ठ (fol. 33b) इत्यादि तद् द्रढ़यति वृहस्पतिवचनोद्धारेण। पिता चेत् पुरुषस्य महागुरुर्भवेत् तर्हि दत्तकग्राहकोऽपि तस्य महागुरुर्भवतु तेन च तन्मरणे दत्तकस्यापि देहाशुद्धिर्भवतु इति शङ्कां निरस्यति—तत्र देहसम्बन्धाभावात् इत्यादिना। उद्धृतयोः वचनयोः पित्रुल्लेखः जन्मदातृत्वेनैव विहित इति कारणात्। किञ्च प्रसङ्गान्तरम्—आचार्यो महागुरुरिति प्रतिपादितम् अस्तु तर्हि आचार्यस्य मरणे पुरुषस्य साम्बत्सरिकी देहाशुद्धिः। नेति, अत्रापि देहसम्बन्धस्य कारणत्वात्। यथा पुत्रजनने तथा कन्या जननेऽपि जनकजनन्योरेव कर्त्तृत्वम्। किञ्च विवाहकाले कन्यासम्प्रदानेन जनकस्य जनकता न व्यपैति। अतो जनकयोर्मरणे ऊढ़ायाः कन्याया अपि देहाशुद्धिरस्तु

---

74. दायभागधृतं (p. 149, एकादशे अध्याये प्रथमपरिच्छेदे) वृहस्पतिवचनम्। कुल्लुकभट्टेनापि मनुसंहिता (9/187) व्याख्यायां श्लोकोऽयमुद्धृतः। कुल्लूकेन 'धर्म्मतः' 'स्थले सुरिभि'रिति पठितम्।

75. मनु (2/146) ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्।। इत्युत्तरार्धः श्लोकस्य।

इति आक्षेपः। "पत्नीनामंशभागित्वं वृहस्पत्यादिसम्मतम्। मेधातिथिर्निराकुर्वन् न प्रीणाति समतां मनः॥" इति कुल्लूवचनम्। परमत्र भवदेवेन पतिपत्न्योर्धर्माधर्मैक्यं समर्थितं वृहस्पत्युद्धारेण॥ शरीरार्धम् इति। नायम् एकदेशि तत्पुरुषविषयः। तत्र "अर्धं नपुंसकम्" (Pā II. 2.2.) इति सूत्रेण अर्धपिप्पली, अर्धराज्यम् इत्यादिषु प्रसक्तिः। अत्र पुनः शरीरस्य अर्धम् शरीरार्धम् इति। नपुंसकं पदम्—तत्र समांशवाची अर्धशब्दः। यत्र तु अर्धवाची तत्र पुंसि प्रयोगः यथा ग्रामार्धः, राज्यार्धः इत्यादयः। वस्तुतस्तु सम्प्रविभागे षष्ठी समासं बाधितुं न एकदेशिसमाससूत्रम्। अतः षष्ठीसमासोऽपि भवत्येव। तेन प्रेम्नः शरीरार्धहरां हरस्य इति षष्ठीसमासे एकदेशिसमासे तु अर्धशरीरहरामिति स्यात्। तद्वदत्रापि। विस्तरस्तु सिद्धान्तकौमुद्यां द्रष्टव्यः।

(34b) .... *mahāgurunipāte* (in the event of death of the *mahāgurus*). Three are the *atigurus* (higher/super *gurus*) of any person—they are mother, father and the preceptor—from this statement the word *mahāguru* is arrived at. 'Husband is the only one (ekaḥ) guru of women'—in this statement from the use of the word *ekaḥ* (only one) it is understood that (for the wife) husband is the main *guru*. Regarding *dharma* & *adharma* (ie. *adṛṣṭa*) (it is said)— In the Veda, in the *smṛtiśāstra*, in popular custom also wife, as per *dharma*, is considered as part of the body of the husband *(ardhāṅgiṇī)* and she gets equal (share—of the husband's wealth, earthly & spiritual) in matters of virtue and vice. (In view of the above) the adoptive father can not become the *mahāguru* of the adopted son—on account of absence of bodily relation and on account of lack of supporting evidence. Therefore in the statement—"the parents, the causes of birth are to be worshipped with care"—their worship-worthiness is mentioned only on account of their being the cause of birth (of the child concerned). Similarly in the statement "Between the progenitor and the preceptor (the initiator into Vedic rites and customs) the preceptor is superior" the praise worthiness of the father is reckoned only because he is the progenitor (natural father) and not for the reason that he may be the adoptive father.

Although the *Ācārya* is an *atiguru*, his death however,

does not create any *dehāśuddhi* (bodily impurity of the disciple rendering him ineligible to do some specified works & rites) on account of absence of bodily relation (as in the case of the parents). If one says that in the case of married daughter, since in her birth the role of the parents is same (as in the birth of a male child)—in the event of demise of them (either or both) let the daughter have *dehāśuddhi* the reply is in the negative. Because the relation of progenitorship recedes with the giving away of her in nuptial rites

(34b) মহাগুরুনিপাতে তু ইত্যাদির অর্থ—"যেকোনও পুরুষের তিনজন অতিগুরু হন, যথা মাতা, পিতা ও আচার্য"—এই (বিষ্ণুস্মৃতির) বচন হইতে মহাগুরু পদের গ্রহণ স্ত্রীলোকদের পতিই এক (মাত্র)গুরু এই বচনে এক (মাত্র) পদের দ্বারা স্ত্রীলোকের মুখ্যগুরু স্বামী-ই ইহা পাওয়া যায়। ধর্ম ও অধর্মের (অদৃষ্টের)একতা বিষয়ে বেদে, স্মৃতি শাস্ত্রে ও লোকাচারে ধর্মানুযায়ী পত্নী জায়া পতির দেহের অর্ধাংশ তুল্য (অর্ধাংগিনী)। পুণ্য ও অপুণ্য ফলের সমান ভাগিনী—(বৃহস্পতির) এই বচনবশতঃ (স্বীকার্য)।

দত্তকগ্রাহক দত্তকপুত্রের মহাগুরু হইতে পারে না, দেহ সম্বন্ধের অভাববশতঃ ও প্রমাণের অভাববশতঃ। তাই "জন্মের হেতুদ্বয় স্বরূপ যে পিতা ও মাতা তাঁহাদের যত্নসহকারে পূজা করা উচিত' এই বচনে জন্মের কারণ বলিয়াই তাঁহারা পূজনীয় এইরূপ বলা হইয়াছে। পুনশ্চ "জনক পিতা ও সাবিত্রী মন্ত্র দাতা আচার্য রূপ পিতা—এই দুইজনের মধ্যে মন্ত্রদাতা আচার্যই গরীয়ান্"—এই বচনেও উৎপাদক জনকরূপেই পিতার গৌরব কথিত, দত্তকগ্রাহক বলিয়া কোনও গৌরবের কথা বলা হয় নাই।

(তাদৃশ) আচার্য অতিগুরু হইলেও তাঁহার মরণে দেহাশুদ্ধি হয় না—কারণ তাঁহার সহিত শিষ্যের কোনও দেহ সম্বন্ধ থাকে না।

আচ্ছা যদি বলা হয় যে বিবাহিত কন্যারও, জন্ম ব্যাপারে পিতার জনকত্ব (পুত্রের জন্ম ব্যাপারের মতই) সমান বলিয়া, জনক জননীর মরণে দেহাশুদ্ধি হোক। উত্তর হইবে না। কারণ কন্যাসম্প্রদানের দ্বারাই জনকত্ব দূরীভূত হয়।

## 67. मूलम्

**(35A) मपगतं तथा दत्तस्यापि वालस्यानपगता जनकता जनकयोरिति चेत्। दत्ताया हि पत्यारेव महागुरुत्वमेकपदेन पित्रादिव्युदासेनाहितम्। निबन्धभिस्तदेव-शरणमदृष्टद्वारादेहसम्बन्धश्चेति। न खलु भाक्तपुत्रे दत्तकादौ तादृक् प्रमाणमस्ति। ततश्च जनकमरणे एव तस्य देहाशुद्धिर्वार्षिकी दुर्वारा न तु ग्रहीतुर्मरणे। न चात्र गोत्रैक्ये सति तादृक् सम्बन्ध एव तत्प्रयोजक इति वाच्यम्, सपिण्डाचार्य्येऽतिव्याप्तेः। एवमदत्ताया दुहितुश्च पतिसम्बन्धाभावात् सुतरां देहाशुद्धिरस्त्येवेति दिक्। प्रपञ्चितमन्यद् व्यवहारतिलके विस्तरश्चेहोपेक्षित इति॥**

**वालवलभी भुजङ्गसञ्चितं दत्तकादि सुतमानसोदयम्।**
**दोषमोषपरितोषशालिभिर्धार्य्यताममलबुद्धिभिः (वुद्धि) सूरिभिः॥**

**प्रायश्चित्ते तिथौ शुद्धौ सम्बन्धे ग्रहयज्ञके। व्यवहारे च संस्कारे वैद्यके विषमोचने। वेदभाष्ये शब्दभाष्ये या कृतिः साहि दत्तके।[76] कृतिः कल्याणजनिका कणिका संस्कृतस्य च भवदेवस्यार्थनेयं मोदायास्तां विवेकिनाम्॥**

**दीप्तिः**

(35a) तद्वद् दत्तवालकस्यापि जनकता मा व्यपगच्छतु इति चेत् न। ऊढ़ायाः दत्तवालकस्य च जनने मरणे वा देहाशुद्धिर्नास्ति। पतिरेको गुरुः स्त्रीणाम् इत्यादिवचने एकपदेन पत्युरेव महागुरुत्वं स्वीकृतं निबन्धकारैः। पतिपत्न्योर्देहसम्बन्धश्च धर्माधर्मद्वारा अर्थात् अदृष्टद्वारा सम्पाद्यते। दत्तकादि गौणपुत्रे तादृक् प्रमाणं नास्ति। तेन जनकमरणे एव तस्य देहाशुद्धि दुर्वारा न तु ग्राहकमरणे। सगोत्रदत्तकस्थलेऽपि दत्तक ग्राहकयोर्गोत्रैक्यं तथाविधसम्बन्धं प्रयोजयति येन देहाशुद्धिरापतेत्। परन्तु इदं सपिण्डेष्वपि आचार्येषु अतिव्याप्तं भवेदिति न ग्राह्यम्।

अनूढायाः कन्यायाः पतिसम्बन्धाभावात् जनकयोर्मरणे देहाशुद्धिर्वर्त्तते एव। प्रासङ्गिकमन्यत् व्यवहारतिलके प्रपञ्चितम् इति आशास्महे वयं तस्य लुप्तग्रन्थस्य उद्धारो यथा भवेद् इति।

बालवलभीभुजङ्ग(म) शब्दस्तु व्याख्यातॄणां शिरोभाञ्जनः। अस्माभिस्तु बालवलभी

76. **अस्मात् ज्ञायते यत् द्वादशविषयान् अवलम्ब्य भउभवदेवो ग्रन्हान् विरचयामास। परं न ते ग्रन्हाः सर्वे अधुना दृष्टिगोचराः। उपोद्घाते आलोचितोऽयं विषयः॥**

इति स्थाननाम, भुजङ्ग(म) इति श्रेष्ठत्वसूचकः अथवा शासकीय पदस्य नाम-इत्याशयवद्भि रुपोद्घाते आलोचितम्।

पुष्पिकाप्रदत्तश्लोकेभ्यः महानसौ निबन्धकारः द्वादशसु विषयेषु निबन्धान् विरचय्य सारस्वतं तपश्चरणं इति ज्ञायते। प्रसङ्गेऽस्मिन् भुवनेश्वरनगरीप्राप्तस्य भवदेव प्रशस्तिमूलकस्य लेखस्य आलोचनं समीचीनम् इत्यस्तु शम्।

(35a) If one holds that the progenitors of the adopted child do not lose their parenthood of the child given that way the reply is by nuptial rites the status of a *mahāguru* of a married girl is transferred to her husband and this is indicated by the use of the word *eka* (one ie. only) in the quotation and that removes the status of *mahāguru* for her father (and mother of that girl). That is the (only) resort of the *(smṛti)* digest writers (and) union of the (two) bodies is possible by the unseen cause (*adṛṣṭa*, ie. *dharma* and *adharma*).

In the case of secondary sons (like *dattaka*) there is no such supporting evidence. Therefore in the event of demise of progenitors — the bodily impurity for one year of the *dattaka* son becomes hardly restrained and not in the case of death of the adoptive father. Nor can it be said that the unification of the *gotra* (by transference at the time of adoption) is effective in producing *dehāśuddhi*— because in that case the principle becomes too-wide and covers the case of (extension of *dehāśuddhi*on the demise of) *sapiṇḍa* preceptor also. Thus in the case of unmarried daughters their dehāśuddhi is all the more applicable because of want of relation with the husband.

Other (related) matters are elaborated in the *Vyavahāratilaka* and details therefore have been by passed here.

Let this text collected by the Bāla-valabhī-bhujanga. Bhavadeva bhatta, for comprehension of matters relating to the *dattaka* son etc. be accepted (for approval) by scholars with flawless intellect who revel in removal of flaws.

Whatever be the (academic) activity in the works on *prāyaścitta tithi, śuddhi, sambandha, grahayajña, vyavahāra, saṃskāra, vaidyaka, viṣamocana, vedabhāṣya* and *śabda bhāṣya*, the same activity is here on the *dattaka* too. This

**activity, producive of well being and a particle of Sanskrit also—be conslusive for the happiness of discerning people; this is the solicitation of Bhavadeva.**

(35a) যদি বলা হয় যে দত্তক বালকের ক্ষেত্রেও দানের দ্বারা তাহার জনকের জনকত্ব সম্বন্ধ দূর হয় না—তখন উত্তর এই যে—দত্তা অর্থাৎ বিবাহিতা তাহার স্বামীতেই মহাগুরুত্ব আসিয়া যায়, উদ্ধৃত শ্লোকস্থ 'একঃ' এই পদের দ্বারা পিতা প্রভৃতির নিরসন দ্বারা (উক্ত মহাগুরুত্ব স্বামীতে) স্থাপন করা হয়। নিবন্ধকারগণ সেই ব্যাখ্যানই আশ্রয় করিয়াছেন (যে) অদৃষ্ট দ্বারা দেহ সম্বন্ধ স্থাপিত হয়। দত্তকাদি গৌণপুত্রে কিন্তু তাদৃশ প্রমাণ নাই। অতএব জনক পিতার মরণে দত্তকপুত্রের সম্বৎসর ব্যাপিনী দেহাশুদ্ধি দুর্বার হইয়া পড়ে, গ্রাহকপিতার মরণে নয়। যদি বলা হয় যে দত্তককরণের দ্বারা গ্রাহকপিতার সহিত এক গোত্রতা সম্পাদিত হয় অতএব সেই গোত্রৈক্যই বর্ষব্যাপিনী দেহাশুদ্ধির প্রযোজক হউক—তাহাও বলা যায় না—যেহেতু সপিণ্ড আচার্যের ক্ষেত্রেও সেই কারণ অতিব্যাপ্ত হইয়া পড়ে। এইভাবে অনূঢ়া কন্যার ক্ষেত্রে পতির সহিত সম্বন্ধের অভাব বশতঃ (জনক মরণে) তাহাদের বর্ষব্যাপিনী দেহাশুদ্ধি অধিকতর ভাবে প্রযোজ্য—ইহাই সিদ্ধান্ত।

অবশিষ্ট অন্য বিষয় সকল ব্যবহার তিলকগ্রন্থে আলোচিত হইয়াছে (এবং) বিস্তৃত আলোচনা এখানে (দত্তকতিলক গ্রন্থে) উপেক্ষিত হইয়াছে—ইতি।।

বালবড়রী ভুজঙ্গ (বালবলভী ভুজঙ্গ, ভবদেব ভট্ট) দ্বারা রচিত (সঞ্চিত) দত্তকাদি পুত্রদের বিষয়ে চিন্তন প্রকাশক, দোষাপসারণে সন্তোষ লাভকারী শুদ্ধ বুদ্ধি পণ্ডিতদের দ্বারা এই গ্রন্থ গৃহীত হউক। প্রায়শ্চিত্ত বিষয়ক গ্রন্থে, তিথি বিষয়ক গ্রন্থে, শুদ্ধি-গ্রন্থে, সম্বন্ধ-গ্রন্থে, গ্রহযাগ-গ্রন্থে, ব্যবহার (তিলক) গ্রন্থে, সংস্কার-গ্রন্থে, বৈদ্যকশাস্ত্রে, বিধানপাকরণক জাঙ্গলী বিষয়ক গ্রন্থে, বেদ ভাষ্যে, শব্দ ভাষ্যে যে কৃতি তাহাই দত্তক তিলক গ্রন্থে (পরিস্ফুট হইয়াছে), কল্যাণকারী ও সংস্কৃত ভাষা কণিকারূপিণী সেই কৃতি শুভাশুভ বিচার শক্তিযুক্ত পণ্ডিতদের আনন্দের কারণ হউক ইহাই ভবদেবের প্রার্থনা।

## मूलम्

**(35B) इति श्रीभट्टभवदेवकृतो व्यवहार तिलकोत्तरो दत्तकतिलकः सम्पूर्णः।।**

**वालवलभीभुजङ्गैः कृता दत्तकादिसुतकर्मकोचिता ।**

**पुस्तिकेयमधुना सुदुर्लभाप्यस्तु सा सदयप्राज्ञवल्लभा ।।**

नगेन्दु विलेन्दुमितेऽत्रशाके तिथौ विशाखायुतपूर्णिमायाम् ।
ईशप्रसादेन समाप्तिमागाद् व्याख्यातरूपो भवदेवग्रन्थः ॥
स्वस्ति प्रार्थयते चायं जयदेवो विमूढ़धीः ।
काली कृपार्द्रहृदया पातु नो जगदम्बिका ॥

इति सावर्णगोत्रीय वालवलभी भुजङ्ग श्रीभवदेव भट्ट कृत दत्तकतिलकस्य सावर्णगोत्रीय श्रीजयदेव शर्मविरचिता तिलकदीप्ति टीका समाप्ता ॥ शिवं भूयात् ॥ श्रीरस्तु॥ शुभमस्तु ॥ शाके १९१७ वैशाखी पुर्णिमायाम् ॥

# Appendix I

## दत्तकपुत्रग्रहणप्रयोग

**[as prepared by Mm. Bharatchandra Shiromani and appended to his edition of the *Dattakamimāṃsā* and *Dattakacandrikā*, Calcutta — 1857]**

ग्रहणात् पूर्वदिने कृधोपवासः परदिने कृतनित्यक्रिया यजमानः कुशहस्त आचम्य विष्णुं स्मृत्वा नारायणाय गन्धपुष्पं दत्त्वा स्वस्ति वाच्यकर्त्तव्येऽस्मिन् पूत्रप्रतिग्रहकर्मणि पुण्याहं भवन्तोऽधिव्रुवन्तु इति त्रिः श्रावयेत्/ततः स्वस्ति ऋद्धिक वाचयित्वा स्वस्ति न इन्द्र इत्यादिकं पठित्वा संकल्पं कूणात्। अद्येत्यादि अमूकगोत्रः श्रीअमुकदेवशर्मा अप्रजत्वप्रयुक्त-ऋणापाकरण पुन्नामनरकत्राण द्वारा श्रीपरमेश्वरप्रीत्यर्थं मनुवृहष्पतिवशिष्ठ शौनक पराशरादि-ऋषिवाक्यानुसारेण्यत्मवंशरक्षार्थञ्च स्वशायोक्तविधिना पुत्रप्रतिग्रहमहं करिष्ये इति संकल्प गुरुं सम्पूज्य व्राह्मणान् वृणुयात्। ततो वृताचार्यः पञ्चगव्येनवेदीं शोध्यात्वा विघ्नानुत्सार्य आत्मशुद्धिं कृत्वा घटान् संस्थाप्य गणेशादीन् ग्रहान् दिक्पालान् प्रजानतिं विष्णुञ्च यथाशक्ति सम्पूज्य स्वशाखोक्तविधिना वह्निं संस्थाप्य चरुं कृत्वा स्ववामे स्थापयेत्। ततो ग्रहीता वन्धूनाहूय राजनि निवेद्य परिषदि दातुः समक्षं गत्वा पुत्रं देहीति याचेत/दाता यो यज्ञेनेति पञ्च मन्द्रान् पठित्वा ददानीजुक्त्वा वालकं दद्यात्/ग्रहीता तु देवस्य त्वा प्रसवेश्विनोर्वाहुभ्यां पुष्णो हस्ताभ्यां गृह्णन्नसाविति मन्त्रेण हस्ताभ्यां तं परिगृह्य धर्मात्वापरिगृह्णामि सन्तत्यैत्वा परिगृह्णामि इति वदेत्। अङ्गदेङ्गात् सम्भवसि हृदयादधिजायसे। आत्मावै पुत्र नामानि सजीव शरदः शतम् इत्येकवारं पठेत्/यस्त्वा हृदाकीविशामन्यमानोमर्त्यियं मर्त्यियो जोऽवीमि। जातवेदो यशोऽस्मामुवेहि प्रजाभिरग्ने अमृतमयस्याम्॥१॥ तुज्यमग्रे परैरवहश्च रायं वहतु नः सह पुनः पतिभ्यो ना आन्दाअग्ने प्रजया सह॥२॥ सोमोऽद दद्गन्धवाय गन्धवोऽदददग्नये, वयिश्च पुत्रक ददौ स मह्यमयोऽमाय्॥७॥ इति ऋक्त्रयं प्रतिऋचं पञ्चवारं हुत्वा जपेत्॥ चतो दाता इमं मन्त्रं पठेत्। अङ्गदेङ्गेन संजातः संजीव शरदःशतम्। गोत्रान्तरं चतः प्राप्य स्वस्तिमांस्त्वं सदा भव॥ पुत्रं मे धर्मतोदत्तं धर्मतः परिगृह्य च। पानयैनं यथान्यायं विधिपूर्वं यथौरसम्॥ ग्रहीता तु--धर्मार्थाय प्रजार्थाय रक्षणाय कुलस्य च। गृह्णामि त्वां यथान्यायं विधिपूवं प्रयत्नतः। पितृगोत्र निवृत्तिश्च

मदगोत्रं प्राप्तवान् भपन्। स्वस्तिरस्तु सुखंचास्तु दीर्घायुस्त्वं सदा भव। इति पठित्वा शिशोमूर्धाभिघ्राणं कुर्यात्। ततः पुत्रं वस्त्रकुण्डुलादिभिरलंकृत्य पत्न्यै समर्पयेत्। ततः सपुत्र आधासन्निधौ गत्वा दक्षिणतः अग्न्यभिमुख पैविशति। आचार्यस्तु पूर्वस्थापित चरुणा प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता वभूव। यत्कामास्ते जुहुमस्तन्नोऽस्त वयं स्याम पतयो रयीणाम्--स्वाहेति मन्त्रेण शतसंख्यप्रजापतिहोमं कृत्वा चरुहोमं समाप्य स्वशाखोक्तविधिना महाव्याह्रतिहोमं स्विष्पकृद्धोमञ्च कुर्थात्। ततो यथाशक्ति ऊडुम्वर समिधा विष्णुहोमं पूजितदेवअनां तिलाज्यहोमञ्च। ततः आट्यायनादि वामदेव्यगानान्तं कर्म अमाप्य श्रुवलग्नभस्मना तिलकं दत्त्वा दक्षिणां दद्यात्।।

# Appendix II

## MS. B. OF THE *DATTAKATILAKA*

[This summarised version of the original work utilised by Mm. Bharatacandra Śiromaṇi in his compilation work, the *Dattakaśiromaṇi*]

**(folio 1b)**

ॐ नमोगणेशाय। चतुर्वदन सद्मस्थचतुर्वेदकुटुम्बिने। द्विजानुष्ठेयसत्कर्मसाक्षिणे ब्रह्मणे नमः।। व्यवहारस्य तिलके दत्तकादेः प्रसङ्गतः। क्रियते भवदेवेन तिलकोदत्तकस्य च।। पुत्राभावे क्रियालोपाद्वंशसंरक्षणात्तथा। पुत्रप्रतिनिधिर्दत्तः कलौ कर्त्तव्य उच्यते। वृद्धवृहस्पतिः यज्ञार्थिनो यथा तैलं सद्भिः प्रतिनिधिः कृतः। तथैकादशपुत्रास्तु पुत्रिकौरसयोर्विना। वृद्धशातातपः- असुतेन सुतः कार्यो यादृक्तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नाम-संरक्षणाय च।। अत्र तेन पुत्ररहितेन पुंसा लिङ्गसंख्याया विवक्षणात्। तथा च मनुः क्षेत्रजादीन् सुतानेतानेकादशयथोदितान्। पुत्र प्रतिनिधीनाहुः क्रियालोपान्मनीषिणः।। आदित्यपुराणे कलौ निषेधोपक्रमे-दत्तौरसेरनान्तु पुत्रत्वेनापरिग्रहः इत्याद्यभिधाय एतानि लोकगुप्त कलेरादौ महात्मभिः। निवर्त्तितानि कर्म्माणि व्यवस्थापूर्वकं वुधैरिति वृहस्पतिरपि अनेकधा कृताः पुत्राः ऋषिभिर्यैः पूरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः। तदेवं कलावौरसाभावे दत्तको विधेयः क्षेत्रजादयः पर्य्युदस्ताः इदानीन्तनैः पुरोवर्त्तिकलियुगभवैः युगान्तरे च क्षेत्रजादेरेव विधानात्। एवं नारदेनाष्टादशव्यवहारा अपि त्रेतायुग एवोक्ताः धर्म्मैकताना पुरुषा यदा स्युः सत्यवादिनः। तदा न व्यवहारोऽभून्न दोषो न च मत्सरः।। नष्टे धर्म्मे मनुष्याणां व्यवहारः प्रकीर्त्तितः। द्रष्टा च व्यवहाराणां राजा दण्डधरः राजा दण्डधरः राजा दण्डधरः स्वयमिति। नष्टे नाशधर्म्मणि। शिखी विनष्टः

---

* Text as found in Ms. no. J. 233 of the Sanskrit Sahitya Parisad, Calcutta (Vide New Catalogus Catalogorum, Vol. VIII, p. 306).

**(folio 2a)**

इति वत्। दण्डधरो राजा पृथुः त्रेतायां। प्रजानां रञ्जनाद्राजा पृथुर्वेणशरीरजः। उत्सारयामासगिरीन्दण्डं दुष्टेष्वपातयत् इत्यादि पुराणवाक्यात्।। अथ प्रसङ्गादुच्यन्ते द्वादशविधा एव पुत्राः। तत्र मनुः एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। स्वक्षेत्रसंस्कृतायान्तु स्वयमुत्पादयेद्धि यं। तमौरसं विजानीयात् पुत्रं प्रथमकल्पिकम्।। यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य। स्वधर्म्मेण घृतन्त्रक्षाणादिना य पुत्रः क्षेत्रजः स्मृतः। माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः। सदृशं तु प्रकुर्य्याद् यं गुणदोषविचक्षणं। पुत्रं पुत्रगुणैर्युक्तं सविज्ञेयश्च कृत्रिमः। उत्पाद्यते गृहे यश्च न च ज्ञायेत कस्य सः। स्वगृहे गूढ़उत्पन्नस्तस्य स्याद् यस्य तल्पजः।। मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते। पितृवेश्मनि कन्यातु यं पुत्रं जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोचुः कन्यासमुद्भवं।। या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती। वोदुः स गर्भो भवति सहोढ़ इति चोच्यते।। क्रीणीयाद् यमपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा।। या पत्या वा परित्यक्ता विधवा वा यमिच्छया। उत्पादयेत् पुनभूर्त्त्वा स पौनर्भवत्तच्यते।। सा चेदक्षतयोनिः स्यात् गताप्रत्यागतापि वा। पौनर्भवेन भर्त्ता पुनः संस्कार मर्हति।। माता पितृविहीनो य स्त्यक्तो वा स्यादकारणात्। आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृतः।। यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतं। स पारयन्नेवशवस्तस्मात् पावशवः स्मृतः।। दास्यां वा दासदास्यां

**(folio 2b)**

वा यः शूद्रस्य सुतो भवेत्। सोऽनुज्ञातो हरेदंशमिति धर्म्मो व्यवस्थितः।। पुत्रान् द्वादश यानाह नृणां स्वायम्भवो मनुः। तेषां षड्बन्धुदायादाः षडदायादवान्धवाः।। तथा औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढ़ोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्।। कानीनश्च सहोढ़श्च क्रीतः पौनभर्वस्तथा। स्वयंदत्तश्च कौत्रश्च षड़दायादबान्धवाः। एतानि व्युत्क्रमपठितानि। षडबन्धुदायादा इति दायादाबान्धवाश्च षट् इति स्वोक्तविरोधात् बान्धवाः सपिण्डाश्च ते दायादाश्चेति समासः न च वन्धूनां दायादा इति। दायः पितृभ्रातृपितृव्यमातामहत्वादि सम्बन्धोपजातसत्त्वकं स्थावरादि तमाददते शास्त्रादिना यथेष्टविनियोगेन ऽवीकुर्व्वत इति दायादाः। स्वगोत्रबान्धवज्ञाति वन्धुश्च स्वजनाः समाः इत्यमरः। अत्र वान्धवपदोपादानं सपिण्डादिधनाधिकारार्थं श्राद्धादिक्रियार्थं त्रिरात्राशौचभागित्वार्थश्च जनने मरणे चैव त्र्यहाशौचस्यभागिन इत्येकवाक्यवलात्। षड्दायादवान्धवा इति कानीनादयः षट् अण्यायादा अपि वान्धवा वन्धुकार्यमुदकं

कुर्युः पूर्व्वपूर्व्वाभावे धनभाजश्मौत (।) तथा च वौधायनः औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ। गूढश्चैवापविद्धश्च ऋक्‌थभाजः प्रचक्षते।। कानीनश्च सहोढ़श्च क्रीतं पौनर्भवं तथा/स्वयंदत्तं निषादश्च गोत्रभाजं प्रचक्षते।। अत्र पूर्व्वषट्‌कानां वचनान्तरादौरस साहचर्य्याच्च सगोत्रत्वं। मनुना पुत्रिकापुत्रस्यौरसतुल्यत्वात् द्वादशान्तर्भावो नोक्तः। अतएव याज्ञवल्क्यः औरसो धर्म्मपत्नीजस्ततत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातश्च स्वगोत्रेणचरेण या।। गृहे प्रच्छन्न उत्पन्नो गूढ़जः स सुतः स्मृतः।। कानीनः कन्यकाजातोमातामहसु--

**(folio 3a)**

तः स्मृतः। अक्षतायां क्षतायां वा जातः पौनर्भवो मतः। दद्यान्माता पिता वा यं स पुत्रो दत्तकः स्मृतः। क्री॰॰स्तु ताज्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः। दत्तात्मातु स्वयंदत्तो गर्भच्छन्नः सहोढ़जः। उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः। पिण्डदोऽर्थहरश्चैषां पूर्व्वाभावे परःपरः। अत्र पुत्रिकापुत्रस्यैव सतुल्यत्वं पूर्व्वपूर्व्वाभावे धनभागित्वञ्च स्फुटमेव। औरसपुत्रकयोधर्म्मित्वात् दत्तकः षष्ठो भवति तेनास्य नारद-मनुनैकवाक्यत्वात्। नारदः औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च। कानीनश्च सहोढ़श्च गूढ़ोत्पन्नस्तथैव च। पुनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा। स्वयञ्चोपगताः पुत्राद्वादशैते प्रकीर्त्तिताः।। एषां षड् बन्धुदायादाः षड्दायादबान्धवाः। पूर्व्व पूर्व्वः स्मृतो ज्यायान् जघन्यास्तु षडुत्तरे।। क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने। ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात्।। विष्णुः औरसक्षेत्रजपुत्रिकापुत्रगूढ़ोत्पन्न कानीनपौनर्भवदत्तक्रीतकृत्रिम स्वयमुपागत सहोढ़ापविद्धाः पिण्डदोऽशंहरश्चैषां पूर्व्वाभावे परःपरः इति मनुटीकाधृतः पाठः। क्वचिदेतेषां पूर्व्वपूर्व्वः श्रेयान् स एव दायहरः स चान्यान् विभृयात् इति पाठः दृश्यते फलतस्तौल्यं (।) अत्रेदं समाधीयते-- श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी। अविरोधे सदा कार्य्यं स्मार्तं वैदिकवत्सदा इति वचने शाखाभेदात्। स्मृतीनां नानात्वात् तासां कालदेशपात्रभेदेन व्यवस्थेयानि तत्तच्छायाया अविज्ञानात् विरोधः प्रतिभाति। एवं स्मृतिद्वैध स्मृत्यर्थेन विरोधे हि अर्थशास्त्रवाधनं। परस्परविरोधे तु युक्तियुक्तं प्रमाणवत्। प्रमाणं प्रमितिजनकज्ञानं तद्युक्तमित्यर्यः। तत्रापि सर्वस्मृत्यपशदिका--

**(folio 3b)**

मनुस्मृतिरेव वेदार्थोपनिवद्धत्वात् प्राधान्यं हि मनुस्मृतेः। मन्वर्थविपरीता या सा स्मृति र्न प्रशस्यते इति वचनात्। वेदेति अपौरुषेयत्वेन चोदनालक्षणार्थोवेदः स च

ऋग्यजुः सामाथर्क भेदेन चतुर्धाविभक्त स्तेषां त्रयी तु वहुशायिका इति तदर्थस्य उपपरमेष्ठिमुखात् साक्षादेवावधारणेन निश्चयेन निवद्धात् ग्राह्यतत्त्वादित्यर्थः (।) तस्यैव निःश्वसितं यदेतदृग्वेद इति श्रुतेः। अन्यस्मृतीनां पारम्पर्य्योपदेशेन निवद्धत्वाद् गौणतेति। यत्तु कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः। द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः। इति पराशरवचनं तद्व्यवहारेतरधर्म्माणां कृते प्राशस्त्यार्थकंम् अतएव शाङ्करभाष्ये-यत् किञ्चिन्मनुराह तद्भेषजमित्युक्तं व्यक्तं वृद्धमणौ--यं धर्म्मं कथायमास भृगवे च मनुः पुरा। भेषजं तद्विजानीयान्मानवानां चतुर्युगे।। अन्ये चोक्ते संहिते द्वे त्रेताद्वापरयोः कृते– अन्ये वृहन्मनुवृद्धमनुसंज्ञिते, एवञ्च वेदार्थानुभवजन्यमुनि-वाक्यानामेव स्मृतित्वमिति सामान्यत एवोक्तं युक्तियुक्तमस्यायमर्थः, युक्तिविनिगमकत्वे यथार्थज्ञानजनिका सा च क्वचित् कालिकी क्वचिद्देशिकी क्वचिदार्थिकीचेति अत्र च नानामुनिवचनानामनेकतया कानविरोषणतया च समाधानम्। यथा मनोश्चतुर्युग प्रामाणिकत्वेन वौधायनीयस्य। दृष्ट्वा मुग्धान् कलेरादौ श्रौतधर्म्मवहिर्मुखान्। दुःखाभिभूतान् मनुजान् धर्म्मं वौधायनो जगौ इति वचनस्य वक्ष्यमाणकालिकापुराणस्य कलिमात्रार्थविहितस्य औरस–

**(folio 4a)**

पुत्रिकापुत्रयोः साम्येनैक्यात् षष्ठत्वेन दत्तकं गणयतो याज्ञवल्क्यस्य चैकवाक्यतया कलौ च दत्तकेतरकृत्रिमपुत्राणां पर्य्युदस्ततया दत्तकस्य च सपिण्डत्वादशौचभागित्वस्य सर्व्वजनसिद्धतया यमनारदविष्णुवेदवचनेषु पूर्व्वाभावे परःपरः स्याधिकारिकत्वेन दत्तस्यैवप्राप्ते युक्तमेव मनूक्तं बन्धुत्वं दायहरत्वञ्च दत्तकस्येति प्रतीमः। तथाच कालिकापुराणम्--औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढ़ोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे। कानीनश्च सहोढ़श्च क्रीतः पौनर्भवस्तथा। स्वयं दत्तश्च पोष्यश्च षड़िमे पुत्रपांशुलाः। अभावे पूर्व्वपूर्व्वेषां परान् समभिषेचयेत्। तथा च न क्षेत्रजादीं स्तनयान् राज्ये राजाभिषेचयेत्। पितृणां शुद्धयेनित्य मौरसेतनेये सति। विष्णुपुराणञ्च कलिद्वापरयोरन्ते वेदव्यासो भविष्यति। स कर्त्ता सर्व्वशास्त्राणां विष्णुरुद्रांश सम्भवः प्रायेणाल्पायुषः सन्तः कलावस्मिन् युगे जनाः कृत्यादावस्मिन् कलावित्यधिकृत्यैव पुराणशास्त्र प्रवर्त्तनात् च, अत्र दत्तकस्य उत्तरषट्के गणनमपि क्षोत्रजादेः प्राधान्यदशायां त्रेताद्वापरयोरानुसंज्ञिकं कलौ तु मनुवाक्यादेव व्यवस्था इति। एवं यमविष्णादिवचनेष्वप्यु त्तारषट्केषु दत्तकस्य पाठस्तेषां देवलवचनस्य च पूर्व्व-पूर्व्वाभावे परपरस्याधिकार प्रतिपादकत्वं कलौ-दत्तकातिरिक्तकृतेरप्रसस्त्या औरसाभावे पूर्व्वपूर्व्वाभावस्य स्वतः सिद्धतया दत्तकाधिकारः सुतरां सिद्ध एवेति। नारदवचने पितरीत्युपलक्षणं अन्यथा

औरसाधिकारोऽपि सपिण्डधने न स्यात् विशेषेणाभिधानादिति। यत्तु देवलवचनं औरसः पुत्रिकापुत्रः क्षेत्रजः कन्यकोद्भवः। गूढ़ोत्पन्नोऽपविद्धश्च सुतः पौनर्भवस्तथा। दत्तः स्वयमुपेतश्च--

## (folio 4b)

लब्धः क्रीतः कृतस्तथा। एते द्वादशपुत्रास्तु सन्तत्यर्थमुदाहृताः। आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा। तेषां षड्वन्धु दायादाः पूर्व्वेरन्ये पितुरेव षट्। विशेषश्चापि पुत्राणामानुपूर्व्वाद्विशिष्यते। सर्व्वेह्यनौरसस्यैते पुत्रा दायहराः स्मृताः। औरसे पुनरुत्पन्ने ज्येष्ठ्यं तेषां न विद्यते। तेषां सवर्णा ये पुत्रास्ते तृतीयांश भागिनः। हीनास्तमुपजीवेयुर्ग्रासाच्छादन सम्भृताः।। अस्यार्थः--वहवश्चेत्तु सदृशाः पुत्रा दायहराः पितुरिति मनूक्त सजातीयपुत्राणां धनभागित्वम् अनूद्य विजातीयानां विशेषमाह। आनुपूर्व्व्यति पूर्व्वपूर्व्वम अनतिक्रम्येत्यर्थः अनुपूर्व्वप्रातिपदिका स्वार्थे स्वार्थे यनिकृते यवर्थे पञ्चम्या पूर्व्वपूर्व्वमपेक्ष्येत्यर्थः। तृतीयान्तपाठे तु सुषमः। ततश्चात्मजापेक्षया परजास्तदपेक्षया लब्धास्ततो यदृच्छोपगता गौणा इत्यर्थः। धनाधिकारश्चाह अपविद्धान्ता पूर्व्वे षठ् सत्यौरसे क्रमेण वन्धवसपिण्डास्तथा त्यंशदायादाश्च। एतदेव स्फुटीकृतं तेषां सवर्णा ये पुत्रा इत्यादिना। कात्यायनोऽपि--औरसे पुनरुत्पन्ने ते तृतीयांशहारिणः। अन्ये उत्तरगणिताः पौनर्भवादयः षट् सत्यौरसे पितुर्दायादेव त्र्यंशहरा न तु सपिण्डानामित्यर्थादेवकारेण लभ्यते। असत्यौरसे तत्र पौनर्भवादयः षट् पितुर्वन्धूनामपि दायादाः सपिण्डाश्च पूर्व्वापूर्व्वाभावे ध्येया इत्ययसौरसेन सह भागप्रक्रमकथनादर्थः साधीयान्। ननु तेषां मध्ये आद्याः षड्वन्धूनामपि दायहराः अन्ये षट् पितुरेव दायहराः न तु सपिण्डानामित्येवार्थः समुच्यतां तथार्थत्वे मन्वाद्युक्तवन्धुत्व दायादत्व श्राद्धादिकर्त्तृत्व त्रिरात्राशौचत्वादि विधानं व्यर्थं स्याद् दत्तस्य सर्व्वजनसिद्धकृत्रिम पुत्रप्राधान्यं दत्तौरसेतरेषान्तु पुत्रत्वेनापरिग्रह इत्यादि सिद्धं व्याहन्येत। यथा वा तदर्थ स्वीकारेऽपि--

## (folio 5a)

देवलादिवचनस्य कालान्तरीयत्वमेव तु वाच्यम्। अन्यथा ततो दायमपुत्रस्य विभजेरन् सहोदराः। तुल्या दुहितरो वापि ध्रियमानः पितापि वा इति। सवर्णा भ्रातरो माता भार्य्याचापि यथाक्रम्। तेषामभावे गृह्णीयुः तुल्याणां सहवासिनः। तुल्याः सवर्णाः, ध्रियमाणो निर्दोषो जीवदवस्तः सवर्णा भ्रातरो वैमात्रेयाः। देवलवचनेन पत्नी दुहितरश्चेति अपुत्रधनं पत्न्यभिगामीत्यादि याज्ञवल्क्यविष्णादिवचनं प्राप्तं सुतधनाधिकारित्वं पत्न्या

वाध्येत तच्छर्व्व (तत् सर्व्वं) निवन्धृविरुद्ध संसृष्टभ्रातृपरतया देशान्तरीयत्व कालान्तरीयत्वेन वा देवलस्य सङ्गतिं तथैतस्यापि वाक्यस्येति भाव्यं तदेव दत्तकस्य ज्ञातित्वं सपिण्डदायादत्वं सर्व्वजनसिद्धत्वमेवेति दिक्। कलौ क्षेत्रजादीनां पर्य्युदासतया औरसरूपे मुख्यपुत्राभावे तत्प्रतिनिधित्वेन दत्तकः कार्यः। स च सवर्ण एव मुख्यः असवर्णोर्द्ध्वदेहिकनिषेधात् प्रतिनिध्यसम्भवात्। तत्रापि भ्रातृपर्य्यन्ताभावे सोदरभ्रातृपुत्रसत्त्वे स एवाकृतोऽपि पुत्रकार्य्यकारी न तु दत्तककरणाधिकारः। अपुत्रस्य गतिर्नास्ति इति धर्म्मे विनिश्चयः। औरसैर्भ्रातृपुत्रैर्वा पुत्रवन्तो हि सङ्गता इति कालिकापुराणात् वक्ष्यमाणमनुवचनाच्च। भ्रातृपुत्राभावे दौहित्रोऽपि तदभावे सपिण्डस्तदभावे निर्द्दोषसवर्णः। हीनवर्णदत्तकस्तु वैदिकर्म्मानधिकारित्वात् ग्रासाच्छादनमात्रार्थः। हीनास्तमुपजीवषु ग्रासाच्छादनसम्भृतार्धात वचनात्। पुत्रिकापुत्रस्यतु पुत्रिकायां कृतायान्तु यदि पुत्रोऽनु जायते। समसुत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः। ज्येष्ठतानिषेधकमिदं विंशोद्धारादिवारणाय। दत्तकादि करणोत्तरमौरसे जाते औरसे पुनरुत्पन्ने ते तृतीयांशभागिनः। ते क्षेत्रजादयः पुत्राः अधिभक्तस्थावरादौ औरस—

**(folio 5b)**

पौत्रस्याधिकारः दत्तकपौत्रस्यतु दत्तककार्य्याधिकारवशात् प्रवृत्तेः। यत्र त्वौरसदत्तकयोर्विभागम्भत्रैव वेदितव्यः। दत्तकस्यापुत्रापितामहादिधनाधिकारस्यैवोक्तेः। ननु सर्व्वेषामेकजातानामेकश्चेत पुत्रवान् भवेत्। सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् इति मनुवचनात् उक्तकालिकापुराणाच्च भ्रातृपुत्रसत्त्वे न दत्तककरणाधिकार इति वाच्यम् (।) एतद्वचनस्यापि भ्रातृपर्य्यन्ताभावपरत्वात्। पत्नी दहितरश्चैव पितरौ भ्रातरस्तथा तां सुत इत्यादि याज्ञवल्कीयेन सत्यपि भ्रातृपुत्रे पत्न्यादीनामधिकारस्योक्तत्वात्। तथाच भ्रातृपर्यन्ताभावे भ्रातृपुत्रसत्त्वे दत्तकपुत्रो न कार्य्य इति सिद्धम्। एकाजातानामिति एकाभ्यामभिन्नजननीजनकाभ्यां सहोदराणामित्यर्थः एवमेव गोविन्दराज मेधातिथिप्रभृतयः। एवं वहवीनामेकपत्नीनामेका श्चेत् पुत्रिणी भवेत्। सर्व्वास्तास्तेन पुत्रेण प्राह पुत्र वतीर्मनुरित्यत्र एकोऽभिन्नः पतिर्यासां तासाम् एकस्यां जनितपुत्रायामन्यासां तत्सपत्नीनां तत् पुत्रेणैव पुत्रवत्त्वमतो रागादिना कृतानुमतावपि न तासां दत्तककृतावधिकारः यसुतस्य पुंसोरनुमतेरकिञ्चित्करत्वात्। असुतेन सुतः कार्य्यः यादृक् तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नाम संरक्षणाय च इति वचनात्। असुतेन सुतसामान्यरहितेन पुंसा न तु स्त्रिया तस्यादान-ग्रहणयोरनधिकारात्। यथा वशिष्ठः शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकः। तस्य दानविक्रयत्यागेषु मातापितरौ प्रभवतः। नैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, स हि सन्तानाय

पूर्व्वेषाम्। न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुरिति पत्यनुमतावधिकारो गौण एव, तत्र हि पुरुषस्यैवानुमति प्रकाशनद्वारा तत्कालावध्यवस्थापनात्, अपूर्व्वद्वारा कर्म्मणः फलावध्यवस्थानवत् ग्रहणवत् दानेऽपि वोद्धम्। न च मातापितरौ प्रभवत इति द्वन्द्वश्रवणात् माता पिता वा दद्याता

**(folio 6a)**

मित्यादिश्रवणाच्च। जनकाभावे जनन्या अपि दानग्रहणयोः स्वातन्त्र्यं, द्वन्द्वस्य प्रत्येकशक्त्वत्वादिति वाच्यं अनुज्ञाविधिविरोधात्। ननु तत्रापि साहित्यं तन्त्र्यमिति चेत्तर्हि व्यर्थोऽयं न स्त्री दद्यात् प्रतिगृह्णीयाद्वेति प्रतिषेधः स्त्रियाह्यस्वातन्त्र्यतायाः सर्व्ववादित्वेन पुरुषेष्वधीनप्रवृत्तिकत्वात् (।) तथा च हारीतः दारार्थे वा धनार्थे वा धर्म्मार्थे वा विशेषतः। आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति।। नारदः स्त्रीकृतान्यप्रमाण्यानि कार्य्याण्याहुरनापदि। विशोषतो गृहक्षेत्रदानाधमनविक्रयाः।। एतान्येव प्रमाणानि भर्त्ता यद्यनुमन्यते। पुत्रपत्युरभावे च राजा च पतिपुत्रयोः।। अनापदि इति आपत् प्रतीकारार्थं स्त्रीकृतान्यपि प्रमाणान्येव इत्युक्तं। एवञ्च स्वत्वध्वंसजनक दानमापदि स्त्रियापि पुत्रस्य कार्य्यं न तु ग्रहणमपीति दान एव द्वन्द्वपदादिसम्वन्धात्। अतएव यतः शुक्रशोणितसम्भवस्य पुत्रस्य मातापितरौ निमित्तकारणरूपौ यस्य तादृशस्य स्वजनस्य दानविक्रयरागादिकृतत्यागेषु तौ प्रभभवतः न तु ग्रहणे इत्येतदर्थादेव मातुर्जननकर्त्तृत्वेऽपि सति पत्यौ दाननिषेधात् स्वतन्त्रतया ग्रहण निषेधश्चोपपद्यते। एकं वंशधरं पुत्रमापदादिना दातुमिच्छतोऽपि न गृह्णीयादिति अत्र स्वतन्त्रेच्छस्य नियन्तुमशक्यमिति न्यायेनापुत्रितावस्थायानेकेच्छया वहवोऽप्येकेनानुष्ठानेन कृताः सिध्यन्त्येव न पुनरेकेच्छयाऽपि पृथगनुष्ठान कृता इत्यर्थः। नैवमनुमतावपीति वोद्धम। एवञ्च वहवश्चोत्तु सदृशाः पुत्राऋक्थहराः पितुरित्यादि मनुवचनं पौनर्भवस्वयंदत्तदासादिपुरःसरं। एष्टव्या वहवः पुत्रा यद्यप्येको गयां व्रजेत् यजेद्वाप्यश्वमेधेन नीलं वा वृषमुत्सृजेदित्यादिवचनञ्च गयादिगमनरूपोपकृतिमात्र प्रयोजनकत्वात् पुत्रसामान्यविषयम्। न च दशास्यां पुत्रानाधेहि इत्याधानविषयकश्रुत्यैकवाक्यतया औरसपुत्रपरत्वस्य वाच्यं सम्वोवकाभावात्। केचिदश्वमेधश्रुतेरौरसपरत्वमाहुस्तच्चिन्त्यं युधिष्ठिरादेः क्षेत्रजादेरपि दर्शनात् इति तादृशानामप्यपकारस्य वेदविरुद्धस्य प्रामाण्यं। यद् यदाचरति श्रेष्ठस्तत्तदेवेतरे जना इत्यादि गीतोक्तेः। वेदविरुद्धस्य वहूनामेकपत्नी कस्यानाचार इत्यनया दिशा सर्व्वत्र समाधेयम् इति।

**(folio 6b)**

उक्तस्थले हि प्रयोजननानात्वेनेच्छाया अपि नानात्वात् पाण्डोः पञ्चपुत्रकत्वमविरुद्धं। वृषोत्सर्गगयागमनादिरूपोपकृतेरेकेनैव निर्वाहात्। वहवश्चेदित्यादिमनुवचनं पौनर्भवादि-यादृच्छिकपुत्राणां मनूक्तानामेव वहुकरणेऽपि शक्तं न तु दत्तकादेरित्यतो मनुवृत्तौ औरसक्षेत्रज दत्तादिद्वादशपुत्रानभिधाय वहवश्चेत्तु सदृशाः पुत्रा रिक्थहराः पितुः। पिताहरेदपुत्रस्य रिक्थं भ्रातर एव वा। त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। सम्प्रदातैषां पञ्चमो नोपपद्यते।। अर्थमाह—औरसादीनुपक्रम्याह वहव इत्यादि यदि तु समानरूपाः पौनर्भवादयो वहवः पुत्रास्तदा सर्वएव विभज्य रिक्थं गृह्णीयुः नेति न भ्रातरो न पितरः किन्त्वौरसाभावे क्षेत्रजादयो गौणपुत्राः पितृरिक्थहरा भवन्ति इत्यनेनोच्यते। एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरित्यादिना सिद्धत्वात्। अविद्यमानौरसपुत्रस्य पत्नी दुहितृरहितस्य पिता धनं गृह्णीयात् तेषामभावे भ्रातरो धनं गृह्णीयुः। इदानीमप्यपुत्र पितामहादिधनेऽधिकारं दर्शयितुमाह त्रयाणामित्यादि त्रयाणां पित्रादीनामुदकदानं त्रिभ्य एव च तेभ्यः पिण्डा देयाः चतुर्थः पिण्डोदकयोर्दाता पञ्चमस्य त्रिसम्वन्ध्यो नास्ति तस्मादयुक्तं अपुत्रपितामहादिधने गौणपुत्राणामधिकारः औरसपौत्र प्रपौत्रयोस्तु पौत्रेण लोकान् जयति इत्यादि.....त्रैव धनभागित्वमुक्तमित्यादिना अत्र समानरूपाः पौनर्भवादय इत्युक्तं न तु दत्तकादयः। अभावे पूर्व्वपूर्व्वेषां परान् समभिषेचयेत्। पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत् (।) अयमधिकारः पूर्व्वपूर्व्वाभावे वोद्धयः। कृतिसाध्यत्वात्तेषां पौनर्भवादयस्तु न तथा अतएव कालिकापुराणेन दत्तकादिवत् पौनर्भवस्याधिकत्व प्राप्तौ पार्व्वणाधिकारो निषिद्धयते यथा। कृते पौनर्भवष्टोमे सुतः पौनर्भवसुतः। एकोद्दिष्टं पितुः कुर्य्यान्न श्राद्धं पार्व्वणादिकं। पोनर्भवष्टोमा यागविशेषः तस्मिन् कृतेऽपि एकोद्दिष्टमेव कुर्य्यात् अकृते तदपि नेति। अत उत्कटेच्छया यथाविध्यनुष्ठाने ग्रहीता युगपदेव दत्तकाः सिद्धयन्ति किन्तु तेषामेकोद्दिष्टाधिकारो न तु पार्वणादौ। औरसः क्षेत्रजश्चव विधिना पार्व्वणेन तु।

**(folio 7a)**

प्रत्यव्दमितरे कुर्य्युरेकोद्दिष्टं सुतादश इति वचनप्राप्तेः। अत्र दत्तकस्य पार्व्वणानधिकारे कलौ दत्तकमात्रस्योपादेयत्वेन तस्यैव पार्व्वणाधिकारः। पौनर्भवपर्य्युदास ज्ञापकेन कालिकापुराणीयेन ज्ञाप्यते न श्राद्धं पार्व्वणादिकं इत्यादिना (।) अतएव दाक्षिणात्त्य संग्रहेऽत्रिवचनव्याख्यानं युक्तमेव। यथाऽपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः।। पिण्डः श्राद्धं दैकमञ्जलिदानादिक्रिया और्द्धदेहिकं दाहादि अत्रैव हेतुः पुत्रीकरणे निमित्तं हेतोरित्येकत्व--निर्देशात्

मिलितानामेषामेव हेतुत्वं न प्रत्येकमिति गम्यते। तेनैकैकार्थं न पृथक् पृथक् पुत्रीकरणमित्यर्थः। पुत्रत्वः प्रतिनिधिः कार्य इत्युद्दिश्य गतैकत्वञ्च विवक्षणादित्याहुः। एकेनैव प्रतिनिधिना कर्म्मनिर्व्वाहे तत्कर्म्मणि प्रतिनिध्यन्तरकरणस्याशास्त्रीयत्वाच्च। अतएव युधिष्ठिरादीनां प्रयोजनान्यत्वादिच्छाया नानात्वाच्च पञ्चत्वं सुप्रतीतमिति। एवं कृते तु दत्तके तदनुपातित्वाद्यवधारणे प्रायश्चित्तासममनीये च पुत्रान्तरकरणं शास्त्रार्थः। यज्ञादिवृतऋत्विगादिवदिति (।) तथाच द्वादशविधपुत्रहीनेन पुंसा यथाविधि राजज्ञापनवन्ध्वाइवानहोमाद्यनुष्ठानपूर्व्वकं पितृदत्तं जन्मावधिपञ्चवर्षवयस्कम् अकृतजनकगोत्रीयं चूड़ान्तसंस्कारं वालकं दत्तकं कुर्व्वान्तधीमन्तः शास्त्रवेदिनामिति वर्त्तूलार्थः। तत्रापि एकस्मिन् जीवति निर्द्दोषे नान्यं एकेच्छया पत्नीनामनुरोधादेकानुष्ठानेन कृता अपि वहवो दत्तकाः सिद्धाः। किन्तु तत्रापि ज्येष्ठ एव कर्म्माधिकारी नान्ये। तस्मात् प्रयोजनाभावाद् अनुपादेया इति समासः। स्त्रीकर्त्तृकग्रहणे हि अनुज्ञाशास्त्रतोहि स्त्रीकर्त्तृकनिषिद्धग्रहण—प्रवर्त्तकं अनुज्ञानस्याशुविनाशित्वेन तत्प्रयुक्तोऽधिकारः स्त्रियां स्वरूपेणादानावध्यवतिष्ठते फलावध्यपूर्व्वद्वारकर्म्मण इव तच्छुद्धिश्च सिद्धौ निवर्त्तते (।) अथैकस्य कार्य्यस्यानेकनिमित्तकत्वमिवाप्राप्तस्तु कारणवहुत्वेण कार्य्यवहुत्वमिति चेन्न। एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्यन इत्याचार्य्योदायनीयेन। प्रतिनियत कारणसमुदायस्यैकमेव कार्य्यजनकत्वमिति प्रकृते तु स्त्रिया

**(folio 7b)**

दानग्रहणाय निषेधात् प्रतिप्रसवपरत्वेननानुज्ञाशास्त्रस्य सफलतया पुंस एवाधिकृतवैदिकादिकर्म्मणस्त्वेकेनैव निर्वाहादपि पञ्चत्वादिनास्वायोग्यतया.तत् कृतौ प्रतिनिधीषत इति न हि सम्भवति प्रतिनिधेः शास्त्रतः प्रतिनिधिविधानं मुख्यकर्त्तव्यत्वादस्य तथा च तादृशेच्छया सर्व्वाः प्रत्यविच्छेदेनानुज्ञानैक्येनानुष्ठानस्य सकृत्त्वे च द्व्यादयोऽविरुद्धा न त्वनुज्ञामात्रेणेति तत्रापि ते च कर्म्मार्हा इति पुलाकः यथाविधीत्यनेन दानग्रहणेनाभिलापे करणीये अतएव माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं सज्ञेयो दत्रिमः सुतः।। अस्यार्थो मनुवृत्तौ शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तक इत्यादि वशिष्ठस्मरणात् मातापिता वा परस्पराज्ञया यं पुत्रं परिग्रहीतुः समानजातीयं तस्यैव पुत्राभावनिमित्तायामापदि प्रीतियुक्तं न तु भयादिना उदकपूर्व्वं दद्यात् स दन्त्रिमाख्यः पुत्रोविज्ञेय इत्याह। दन्त्रिमो दानादेव पुत्रतामापन्न इत्यर्थः। उदकपूर्व्वमित्यनेन लव्धं वाक्यन्तु अद्यामुकगोत्रोऽमुकप्रवरममुकं ममपुत्रमौरसं दत्तकपुत्रकरणाय तुभ्यमहं संप्रददे। ततो गृहमध्ये महाव्याहृतिहोमं दत्तकपुत्रकरणाय ग्रहीष्यमाणो महाव्याहृतिहोममहं कुर्व्वीय एतदपि राज्ञि ज्ञापयित्वा वन्धुज्ञातिभ्यो

निवेद्य कर्त्तव्यं। प्रयोजनन्तु आभ्यां भ्रातृतत्पुत्रदौहित्रादीनां दुर्वृत्ततावारणमेव। स्त्रीशूद्रयोर्होमानधिकारात् ग्रहणानधिकार इति कश्चित् वस्तुतो व्रत-त्यजिजनादयाद्यर्थक होमंदर्शनात् (?) न स्त्री तु हुयान्नानुपेत्त इत्यादि निषेधस्तु स्वकर्त्तव्यहोमविषयः। तस्माद्ब्राह्मणद्वारा होमयित्वाऽतिलापं गृह्णीयात् श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजं पुनरिति याज्ञवल्क्यीयात्। वाक्यन्तु अद्य अमुकामुकगोत्रोद् मुकप्रवरोऽमुकदेवशर्म्मणे दत्तककरणाय भवन्तमहं ग्रहीष्ये इति। स्त्रीकर्त्तृके तु अमुकगोत्राहममुक–

**(folio 8a)**

गोत्रस्य भर्त्तुर्दत्तकपुत्रकरणाय अमुकगोत्रममुकप्रवरममुकं भवन्तमहं ग्रहीष्यामीति वाक्ये विशेषः। पञ्चवर्षनियमस्तु पञ्चमंवत्सरादर्वाग्गृहीत्वा तु कृतः शिशुं। स्वगोत्रेणैवसंस्काराश्चूडान्ताः परिकल्पयेत्।। अथ चेज्जातमात्रन्तु वालं दद्यादनुग्रहात्। जातकर्म्मादिकं सर्व्वं ग्रहीता तस्य कारयेत्।। पञ्चसंवत्सरात् पञ्चमसंवत्सराणां पूरणं यस्मिन् दिने इति तद्धित प्रत्ययात् साधुः। वृद्धवार्हस्पत्यात् वक्ष्यमाणकालिकापुराणाच्च ऊर्द्धन्तु पञ्चमाद्वर्षान्नच दत्ताः सुता नृप। गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमञ्चरेत्।। पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्रः सः पुत्रतां याति चान्यतः। चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्तेस्युरन्यथा दास उच्यते। दत्ताद्याश्चापि तनया निजगोत्रेण वै कृताः। आयान्ति पुत्रतां सम्यगन्यवीजसमुद्भवाः।। एषामाशयः-- पञ्चवर्षोपरिकालस्योद्भवमित्यनेन लक्षिते पञ्चवर्षात् परं दत्ताद्याः कृता अपि न सिद्धयतीति नञः पर्य्युदासार्थकत्वात् तदेवं पञ्चवर्षीयपरत्व सिद्धौ पञ्चवर्षीयं गृहीत्वा पुत्राभ्युदयिनीमिष्टिं चरुहोमं कुर्य्यात् शालाकर्म्माङ्गाहुतयोऽपि दातव्याः इति प्रथममित्यनेन लक्ष्यते (? लभ्यते) (।) ग्रहणात् पुत्रं नान्दीमुखश्राद्धमप्याचारत्वेनाचार एव प्रमाणाभावात् पुत्रकरणाधिकारस्तु परिभाषित गृहस्थस्यैव नेतराश्रमस्थानामिति (।) तथाहि न गृहं गृहमित्यार्हुगृहिणी गृहमुच्यते। तया हि सहितान् सर्व्वान् पुरुषार्थान् समश्नुते। लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।। पुत्रार्थे क्रियते भार्य्या पुत्रः पिण्डप्रयोजनम् इत्यादि वहुतरस्मृतिभिर्गृहस्थाश्रमस्यैव पुत्रकृतावधिक्रियते। व्रह्मचारिणो नैष्ठिकस्य पित्रादि परित्यागेन गुरुकुलवास एव कृतनियमस्य गृहौदामीन्येनाधिकारः। उपकुर्व्वाणस्य तु समावर्त्तनोत्तरमेव गार्हस्थ्याश्रमप्रवेशात्। वानप्रस्थस्य पुत्रेषु पत्नीं संन्यस्य वानप्रस्थाश्रमेवासेदिति। मनुरपि गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः। अपत्यस्यैवचापत्यं तदारण्यं समाश्रयेत्। संत्यज्य ग्राम्यमाहारं सर्व्वञ्चैव परिच्छदं। पुत्रेषु भार्य्यां निक्षिप्य वनंगच्छेत् सहैव वा।। इत्याद्यारभ्य वनेषु तु विहृत्यैवं तृतीयं

**(folio 8b)**

भागमायुषः। चतुर्थ मायुषो भागं सङ्गं त्यक्त्वा परिव्रजेत्। ऋणानि त्रीन्यपाकृत्य मनो मोक्षे निवेशेयेत्। अनपाकृत्य मोक्षन्तु सेव्यमानो व्रजत्यधः।। ऋणान्याह अधीत्य विविधान वेदान् पुत्रानुत्पाद्य धर्म्मतः। इष्ट्वा तु शक्तितो यज्ञे मनोमोक्षे निवेशयेत्। तथा च श्रुतिः जायमानो व्राह्मणः त्रिभिः ऋणैः ऋणवान् जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्यात्तोयन (?) ऋषिभ्य इति। याज्ञवल्क्योऽपि युतविन्यस्तपत्नीकसुयावानुगतो वनं। वानप्रस्थो व्रह्मचारी साग्निः खोपामनो व्रजेत्। अधीत वेदो जपकृत् पुत्रवानन्नदोग्निमान्। शक्त्या तु जपकृन्मोक्षे मनः कुर्व्वीत नान्यथा इति। मोक्षे सन्न्यासे। ननु भ्रातृजे सत्त्वे पुंसः सपत्नी पुत्र सत्त्वे स्त्रिया पुत्रित्त्वातिदेशेन कृत्रिमाद्यकरणमृतायाः अग्निसपिण्डनं प्रयोजनमिति रत्नाकरकल्पतरु प्रभृतिरुक्तं युक्तं (।) पत्नी दुहितरश्चैवेत्यादि याज्ञवल्क्यविष्णुविरोधात् कथं सङ्गमयितुं शक्यमिति चेत् भ्रातृपर्य्यन्ताभावपरत्वेनैवोपपत्तेर्वाचनिकन्या यावतारत्वाच्च।। अथ वशिष्ठः पुत्रं प्रतिग्रहीष्यन् वन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये महाव्याहृतिभिर्हुत्वा गृह्णीयादिति। वन्ध्वाह्वानादि दृष्टार्थं हरणहदिकमहष्टार्थमित्युक्तं होमस्तु ग्रहण पूर्व्वमुत्तरक्षाभिहितस्तत्रोत्तरे। इष्टिस्तु चरुणा प्रोक्ता यागस्तु पशुना स्मृतः। एतच्छेषः क्रतुः प्रोक्तो होमान्यत् पूजनंस्पृतमिति भट्टोक्त चरुहोसाधिकारे वृष्टिकामो यजेतैति पशुकामः पशु ना पुत्रसामः पुत्रेष्ट्या यजेतैति श्रुतिप्राप्तसाग्निकर्त्तृक पुत्रकामनावदधिकारिकरणीय होमोग्राह्यस्तस्यौरसमात्रपरत्वात् कामनाश्रुतेः। दत्रिमस्तु उपादेयत्वेन न कामनाविषयत्वमिति कामना हि सम्वल्पाध्यवसायिनी सा च मानसीकृतिरेवेत्यतो दत्तकादेरिच्छासाध्यत्वेपि न कामनामात्रविषयत्वम्। तथाच जाते पुत्रे अरालं मथित्वा तस्मिन्नायुष्य होमं जुहोति इत्यादि श्रुत्युक्त औरस प्रकरणीयायुष्यहोमवदत्रेष्टिर्वोद्धव्यः।।.।। अथ संस्काराः।। चूड़ाद्या यदि संस्कारा निजगोत्रेण वे कृता इत्यादि चरमसंस्कारोपलक्षणं कालिकापुराणीयं पूर्व्वसंस्कारानपि लक्षयति(।) अतएव जातकर्म्मादिकं स्वगोत्रेणैव कारयेदित्युक्तं । यदि तु स्वत्वास्पादकग्रहणान्तरं दैवादकृतसंस्कारा न गृहीतापरासु सुत्र (?) ग्रहीतृपत्न्यापि सं

**(folio 9a)**

स्मरणीयः द्वयोरभावे तु तत्प्रनिनिधिवत्वेन पितृव्यादिभिरपि अष्टौ संस्कारकर्म्माणि गर्भाधानमिव यं यं पिता कुर्य्यात् अन्यो वा तदभावेऽपि तत्क्रमात् इति वचनात् तत्क्रमात् संस्कार्य्यं पितृक्रमात्। एवं ग्रहणोत्तरमकृतचूड़ान्तसंस्कारस्य पञ्चवर्षातीतस्य

गौणकालेपि करणीयाः। संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन। हुत्वैतदेव कर्त्तव्या ये तूपनयनादधः उपनयनात् पूर्व्वं कत्तर्व्याश्चूड़ान्ताः संस्काराः। एतदिति महाव्याहृतिभिहूर्त्वा कार्याः। जातकर्म्मादिचूड़ान्तेन विना चूड़ामन्येषां जनमकृतानाकृतानां न पुनर्ग्रहीतृकरणीयतासुकृत्कृतेनैव। एवमेनः शमं याति वीजगर्भसमुद्भवमित्युक्तदोषशासनाय।। अत्र च चूड़ाकार्य्या यथाकुलमिति कुलाचारात् द्विवर्षादौकृतचूड़ एव वालः सत्वनादेयः। चूड़ाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्तेस्युरन्यथा दास उच्यते इयुक्तेः। अन्यथेति जनकगोत्रसंस्कारकवाले गृहीत इत्यर्थः। चूड़ाद्या चूड़ा च तदाद्याश्च इति शाकपार्थिवादित्वात् स्तपदलोपात् साधुः। ग्रहणन्तु विनैवशुल्कं दत्तकयोग्यतापादकं गृहीत शुल्कजनकदत्तगृहीतस्यापि क्रीतत्वेन पाठात् अतएव वयोभ्रान्त्या विषयलोभादिना वा कथञ्चित् पञ्चवर्षाधिकवयस्कवालग्रहणं न पुत्रफलोपधायकम। अयमपिहार्य्यभरणीयश्च भवतीत्युक्तं प्राक्। अत्रापद्यपि शुल्कपरिग्रह प्रत्यवाय श्रुतेः (।) क्रेतुरपि धनादिद्वारा प्रयोजकतया दूरदृष्टमिति। क्रीताया वनितामूल्यैः सा च दासी निगद्यते। तस्यां यो जायते पुत्रो दासः पुत्रस्तु स स्मृत इत्यादि वचनात् मूल्येन क्रीत्वा नोपनयः कार्य्यः एवमपत्यत्वेनाविशेषात् क्रेतु विक्रेतुश्च प्रत्यवाय इति कथं तत् ग्रहणम् (।) न कन्यायाः पिता विद्वान् गृह्णीयात् शुष्कमन्वपि। गृह्णन् शुल्काति लोभेन स्यात्नरोऽपत्य विक्र्यीति मनुनापत्यत्वेन निषिद्ध्यते। तत्रैव भ्रातृपितृव्यादीनां विक्र्यासिद्धिमाह स एव। यासामाददते शुल्कं ज्ञातयो न स विक्र्यः। ज्ञातिभिः शुल्कग्रहणे तच्छरीराजनकत्वेन प्राप्तत्वान्नविक्र्यं सिद्ध्येदितिभावः। अत्रोच्यते पिण्डोदकादिक्रिया प्रतिनिधित्वेन दत्तकस्योपादेयता तत् पुत्रादेः कथं श्राद्धकर्तृत्वं धनभाक्त्वञ्च (,) सत्यमयुक्तमापाततः किन्तु भिन्न गोत्राः पृथक् पिण्डाः पृथकवंशकराः स्मृताः जनने मरणे चैव त्र्यहाशौचस्य भागिन इति वचनमेव समाधायकं भिन्नगोत्राजनकनिबन्धनगोत्रात् पृथकत्वं पृथक्पिण्डादातृत्वेन भोक्तृत्वेन च/एवं पृथग्वंशकराः वंशोनवायः सन्तान इति कोषात्-जनकत्व निवन्धन गोत्रात्ग्रहीतृ—

**(folio 9b)**

गोत्रप्राप्त्या तदीयसन्तानप्रवर्त्तका इत्यर्थः एतद्वचनस्य दत्तकप्रकरणीयत्वेन क्षेत्रजपुत्रिकायाः सन्तानार्थत्वेनोक्तत्वाच्च न कृत्रिमत्वादि पुत्रविषयं किन्तु दत्तकविषयमेव। जनने मरणे चैवेति अशौचमपि दत्तकस्येव न कृत्रिमादेः क्षेत्रजस्य मातृवर्णाशौचविधानात् पुत्रिकायाः कन्यात्वेन त्रिरात्रैकरात्रादिविधानाच्च। ननु गोत्रभाजः प्रचक्षते इत्युक्तवौधायणीयेन गोत्रप्राप्त्याशौचभागित्वमप्यास्तां कृत्रिमादेरितिचेत् तथासति

दत्तकस्य विशेषविधानं व्यर्थं स्यात् परं त्वेषां गोत्रभागित्वेनैवाशौचभागित्वमित्यर्थे किं मानं (?) गोत्रन्तु आदि पुरुषब्राह्मणरूपः नह्यस्ति गोत्रजत्वेन दशरात्रत्रिरात्राद्य-शौचभागित्वं प्रमाणं वयन्त्वत्र गोत्रजानामहः स्मृत इति वचनात् श्राद्धाद्यनुरोधे सति एकाहः न चेत् स्नानमात्रम् इति प्रतीमः। त्र्यहाशौचस्य भागिन इत्यत्र वहुत्वोपादानं सन्तानाभिप्रायं, तथाहि दत्तकस्यापुत्रस्य मरणे सपिण्डानां त्रिरात्रं सकुल्यादीनाम-शौचाभावः। एवं ग्रहीत्रादिसपिण्डकरणे दत्तकस्य तत्सुतादेश्च त्रिरात्रं सकुल्यादीनां मरणे त्वशौचाभावः (।) जनने ज्ञातिपुत्रादीनां सपिण्डजननमरणयोः (स्) त्रिरात्रमपि तु स्वजात्युक्तमेव कालाशौचन्तु दत्तकस्य व्यवहारविरुद्धममूलं, न च दत्तकस्य जनकमरणेप्यशौचकालाशौचवाधकं प्रमाणमस्ति तथाहि दानविक्रयश्च शरीर साध्यव्यवहारार्थं पिण्डाद्युपकारार्थं वात्रच तदीय शरीरशेषिककर्म्माणां स्वसाध्यानां योगादीनाञ्च पूर्व्वभागित्वं ग्राहकादीनामिति नच जनकताप्रयोज्यशुक्रशोणितजन्मत्वाभा-वस्तत्रास्ति तथात्वे उपादाननाशात्, शरीरनाशापतेः घटनाशवत्। न चाप्यस्ति ग्राहकस्य महागौरवं येन देहाशुद्धिरापद्यते (।) साहि विहितकर्म्मानर्हताप्रयोजकोदृष्टरूपा-समवायेनात्मन्यवतिष्ठते न चास्ति आत्मकलेवरयोरेकधर्म्मिकत्वं (।) अतएव प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं न वा पैत्रं यावत् पूर्णो न

**(folio 10a)**

वत्सर इत्यत्र शुक्रशोणितसम्वन्धाद्देहस्यैवाशुचित्वमुक्तं तदेव परम्परया आत्मन्यदृष्टरूपेणाश्रयति (।) शरीरं हि पुण्यपापसाधनमात्रं न तु तत्फल भोक्तृ इति। न च दुहितॄणामदत्तानामिव दत्तानाञ्चास्तु तदिति वाच्यं वाधकात्। तद्व... गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः। पतिरेको गुरुस्त्रीणां सर्व्वत्राभ्यागतोगुरुः। इति वचनमेव जन्महेतूहि पितरौ पूजनीयौ प्रयत्नतं इत्यादि वचनेषूत्पादकत्वेनैव महागुरुत्वं न तु ग्राहकत्वेनेति तथाहि देहसम्वन्धादेव जनकयोर्मृतौ कालाशौचं तागतोस्याचार्थस्य सुतौ (?) तदिति संक्षेपः। पत्न्यास्तु मृते भर्त्तरि नारीणां देहाशौचं भवेत् सममिति शातातपवचनात् देहाशौचं ।। ।। इति श्रीभवदेवभट्टकृतौ व्यवहारतिलकोत्तरे दत्तकतिलकः सम्पूर्णः।। ।। शंकातीताव्दाः १७३७/३/२ शाके सप्ति धनञ्जयाव्धिशशिगे सूर्य्येनभोद्वयंशगे श्रीमद्विप्रचतुर्भुजस्य निखिलव्याख्यातशास्त्रावनेः। आज्ञां प्राप्य वसुन्धरासुरगुरोरङ्गीकृतसादरे श्रीमत्केवलरामपण्डितवरे प्रीत्यैतयोरञ्जसा।। विज्ञाप्याभ्युपपत्तिलब्धुमनमादीनैकवन्धोः परं सन्धानेन सुभागधेयमनिशं व्यालोक्य पत्रीं मुदा। श्रीमद्रामदुलालसेनभिषजा व्यालेखि पुस्तीद्वयं।। स्वस्ति प्रार्थयता चतुर्भुजपददन्द्वारविन्दोत्करे ।।२।। पुस्तकं।।

## Appendix III

### AN ILLUSTRATIVE GLOSSARY OF SMṚTIC TERMS RELEVANT TO ADOPTION

अक्षतयोनि - A virgin not yet blemished by sexual intercourse.

अग्निष्टुत् - Laudatory of Agni. An one day sacrifice—usually the first day of अग्निष्टोम sacrifice.

अग्निष्टोम - Name of a sacrifice forming one of the chief modifications of the ज्योतिष्टोम done by one desirous of obtaining heaven. Here the performer in a brāhmaṇa maintaining sacred fire, the offering is the juice of the Soma plant, the deities are Indra, Agni etc. the number of priest required is sixteen and the ceremonies continue for five days.

अग्रेदिधिषु - Younger sister married before the elder.

अघमर्षण - A kind of expiatory recital of the highly philosophical and cosmogonic Ṛgvedic hymn. X. 190. 1-3. It is also the name of a *vrata* in which one has to fast for three days, stand up by day and sit by night and to donate a anilah cow at the end.

अतिगुरु - Father, mother and preceptor are called अतिगुरु.

अतिथि - (lit. traveller). One not staying permanently. A Brāhmaṇa guest who stays for one night.

अतिदेश (अतिदिष्ट, आतिदेशिक) -Extension of the sphere of application of a certain rule; substitution e.g. the extension of the rules about the murder

of a Brāhmaṇa to the injury inflicted on a Brāhmaṇa by one striking him with the intention of killing. The गोत्र name of the Brāhmaṇa priest extended to the disciple of Kṣatriya or Vaiśya caste.

अनुचान – One who has mastered the Vedas and the Vedāṅgas.

अन्नप्राशन – The ceremony in which a child is fed for the first time, with rice, after birth. According to Yājñavalkya, it is to be held in the sixth month from the child's birth.

अन्वष्टका – The ninth day in the latter half of the three (or four) months following the full moon in Agrahāyaṇa, Pauṣa, Māgha (and Phālguna).

अनुमरण – following in death. The (beastly) custom of post cremation of a widow.

अपविद्ध – One cast off by one's parents and accepted by another person as his son, one of the twelve kinds of sons.

अमत्र – An earthen vessel. A dish. A cooking pot.

अर्धसीरिन् – A cultivator, a ploughman who takes half of the produced crop for his labour.

अवकीर्णी – A Brahmacārin who has fallen from his vow owing to moral turpitude.

अवभृथ – Ablution performed after the conclusion of a sacrifice.

अवीरा – A woman having neither husband nor sons. A woman who is independant but not gone astray.

अशौच – Impurity or defilement caused either by child birth (जनन) or death (मरण) in the family.

अश्वमेध – Name of a sacrifice in which a horse has to be immolated (मनु. 11.261). The horse was to

be let loose by a king under the protection of military. On its return after a year the sacrifice was to be performed.

अष्टका – The eighth day after full moon (especially in हेमन्त & शिशिर seasons) on which the progenitors or manes are worshipped. The three kinds of अष्टकाश्राद्धऽ are (अ)पुपाष्टका– in which cakes are offered. मांसाष्टका in which meat is offered and शाकाष्टका where vegetables are offered.

आग्नीध्र – Coming from or belonging to the अग्नीध priest who kindles the sacrificial fire. The place where the sacred fire is kindled.

आग्रयण – A ritual (इष्टि) in which fresh corns are first offered to the gods after the rainy season. It roughly corresponds to the Bengali custom of नवान्न. The first सोम libations at the अग्निष्टोम sacrifice.

आचार्य – (1) One who, having performed the उपनयन of his pupil, teaches him the Veda along with the Kalpasūtra and the Upaniṣad. (2) One from whom the pupil learns his duties. (3) A teacher/a preceptor in general.

आततायी – [lit. endeavouring to kill some one]. The following hostile persons are so called : an incendiary, a poisoner, one armed with a weapon, a robber, one who wrests a field or carries away another's wife.

आधान – Pledging or mortgaging. Placing or fontting upon (things to others as pledge etc. Kindling of the sacrificial fire.

आधि – Pledge or mortgage of a chattel or immovable property to the creditor himself with or without possession.

आधिवेदनिक – A kind of स्त्रीधन presented to a woman by her husband on his marrying another woman.

आभ्युदयिकश्राद्ध – same as वृद्धिश्राद्ध

आयोगव – (i) One born of the union of a Śūdra male and a Vaiśya female (ii) One born of the union of a Vaiśya male and Kṣatriya female.

आर्षविवाह – One of the eight forms of marriage in which the bride is given away after her father receives a pair or two of cattle as a matter of form and not as price of the bride from the groom.

आसुरविवाह – One of the eight forms of marriage, in which the bridegroom purchases the bride from her father or other paternal kinsmen.

आहवनीय – A consecrated fire taken from the householder's perpetual fire, one of the three fires (the eastern) burning at a sacrifice.

इष्टापूर्त – Of these इष्ट means "whatever is offered in the गृह्य fire and the three श्रौत fires (गार्हपत्य आहवनीय & दक्षिण) and the offerings made inside the वेर्दि in the श्रौत sacrifices.

पूर्त means dedication of deep wells, oblong large wells and tanks (वापी, कुप & तडाग) temples, distribution of food and maintaining gardens".

उग्र – Child of a Brāhmaṇa male and Śūdra female or Kṣatriya male and Śūdra female or Vaiśya male and Śūdra female.

उत्पात – An abnormal natural phenomenon foreboding calamity or one portent.

उटकी/उटक्या – A woman in her monthly impurity.

उपकुर्वाण – A pupil who on completion of Vedic studies and becoming a householder honours his preceptor. A Brāhmaṇa in the stage of pupilage (ब्रह्मचारि) who wishes to pass on to

the stage of a गृहस्थ (opposed to नैष्ठिक ब्रह्मचारिन् or life long celibate).

उपधि – Fraud, circumvention.

उपनयन – Initiation of a pupil, by the preceptor, to Vedic studies.

उपपातक – A class of lapses called minor sins like giving up Vedic studies, following the profession of dancing, singing etc., cow-killing, fornication and the like.

उपवीती – One who wears the यज्ञोपवीत in the regular way i.e. allows it to hang over the left shoulder and under the right arm.

उपाकर्मन् – Commencement of Vedic studies.

उपाध्याय – One who teaches a pupil a portion of the Veda or the Vedāṅgas for livelihood.

उष्ट्रिका – An earthern (wine) vessel of the shape of a camel.

ऋक्थ – Any property, wealth, especially that left by one at death; inheritance.

ऋण – A debt or obligation. Every one that is born has three debts to pay off; to sages (ऋषि-ऋण by learning the Vedas), to the gods (देव-ऋण by offering sacrifices) and to the ancestors (पितृ-ऋण by begetting male child).

ऋत – (i) True, Truth, Proper, Right, Divine Law, Sacred custom. A fixed or settled rule. (ii) Gleaning of corns from agricultural field as a means of a Brāhmaṇa's obtaining livelihood.

ऋत्विक् – Priest, usually of four kinds, viz. Hotā, Adhvaryu, Brahmā & Udgātā.

ऋषियज्ञ – Same as ब्रह्मयज्ञ

एकोद्दिष्ट – A kind of श्राद्ध performed for one definite individual deceased.

औदुम्बर – (i) Made of udumbara wood (ii) Red in colour (ie. made of copper).

औरस – A son begotten by a man on his wife.

कन्या – An unmarried girl or daughter, a virgin, a maiden, a ten year old girl.

कन्याशुल्क – Money given to the bride's father as her price, purchase-money of a girl.

करण – One born of the union of a Vaiśya male and Śūdra female. Child of a Kṣatriya *vrātya* and a kṣatriya woman.

कर्मान्त – (i) A place where sugarcanes and paddy are gathered. A factory. (ii) Conclusion of a work.

कर्म – Action, work or rites. Theologically are of three types– नित्य (obligatory), नैमित्तिक (occasional) and काम्य (desired).

कलिवर्ज्य – Some customs like नियोग, दीर्घकालब्रह्मचर्य etc. which are prohibited in the Kaliage. Some of these कलिवर्ज्यs as enumerated in the आदित्यपुराण have been quoted by भट्टभवदेव in his दत्तकतिलक (fol. 7b). Raghunandana also quoted them in his उद्वाहतत्त्व, P.V. Kane made exhaustive discussion (Hist. of Dharmaśāstra, vol. S. III pp. 926-968) and before him Prof. Batuknath Bhattacharya (Kalivajya).

कव्य – Oblation of food offered to deceased ancestors.

कानीन – Son of an unmarried woman, one of the twelve types of Sons.

कायतीर्थ – The root of the little finger.

कायविवाह – The form of marriage called प्राजापत्यविवाह ।

कायस्थ – (i) A scribe in the revenue department of the king. (ii) Name of a caste which, according to some, is Śūdra.

कामस्तुति – Name of the hymn VII. 48 of the *Vājasaneyi Samhita (=Śukla Yajurveda).*

कीनाश – A cultivator.

कुण्ड – Offspring of the clandestine union between a man and a woman whose husband is alive.

कुम्भकार – A potter, a type of शूद्र. A mixed caste man born of the union between वैश्या woman and ब्राह्मण.

कुम्भीधान्यक – One who has a store of corn, in an earthern vessel, sufficient for six or ten days or according to others for one year or six months. The emphasis is on the non-greediness—on the non-hoarding habit.

कुथुलधान्यक – A householder who has grain stored for three year's consumption.

कुष्माण्ड – Name of a होम

कुष्माण्डी – Name of the verse xx. 14.ff of the *Vajasaneyi Samhita.*

कृच्छ्र – (i) Bodily mortification penance (ii) A particular kind of penance. for an incapable person, one cow is substituted for this penance.

कृच्छ्रातिकृच्छ्र – (i) A penance in which only water is drunk on those days on which food is allowed. (ii) A penance in which one has to subsist on water alone for 21 days, four cows are substituted by some for this purpose when the sinner is incapable of undergoing it.

कृत्रिम – One of the 12 kinds of sons. He is a grown up boy adopted without the consent of his

natural parents or a parentless boy adopted by a person as his son after alluring him with money, land etc.

क्रीत-/क्रीतक – One who is purchased from one's parents in order to be treated as a son. One of the 12 types of sons.

क्षुप – A tree with small roots and branches like the करवीर. A shrub.

क्षेत्रज – One of the twelve kinds of sons allowed by old Hindu Law, the offspring of a wife by a kinsman duly appointed to raise up issue to the husband. A son begotten by a person, by means of नियोग or levirate on the wife of a sonless person. This is forbidden in the Kali age.

क्षेत्रज्ञ – knowing the body, i.e. the Soul. "The conscious principle in the corporeal frame" – Monier-Williams.

क्षेत्रिन् – (i) The husband of a woman on whom a son is begotten by another person, called बीजीन्, according to नियोग (ii) Owner of a field.

गजच्छाया – A particular astral conjunction.

गर्भाधान – Impregnation. A sacrament performed to ensure the birth of a good child. Regarding the time of performing it opinions vary.

गयाश्राद्ध – Performing श्राद्ध for the deceased at Gayā after doing the वार्षिक-सपिण्डीकरण.

गान्धर्वविवाह – One of the eight forms of marriage wherein the bride and the groom marry with mutual consent (after courtship).

गार्हपत्य (अग्नि) – The householder's sacred fire received from his father and transmitted to his descend ants; one of the three sacred fires, being that from which sacrificial fires are lighted.

गुर्विणी – A pregnant woman.

गुल्म – (i) A troop (piquet) or guard of soldiers to watch the enemy. (ii) Shrub.

गूढ़ज/गूढ़ोत्पन्न – One of the twelve kinds of sons, borm to a woman during the absence of her husband, the real father being unknown.

गोचर्म – A measure of land equivalent to : (i) 10 निवर्तन-s, each निवर्तन being equal to 30 rods square with a rod of 10 cubits. (ii) that extent which a thousand cows, with their calves and a bull, occupy without being compelled to stand doing nothing. (iii) that extent which a hundred cows, with one bull, occupy without being packed closely together. (iv) that much land the crops on which can maintain one man for a year.

गोज – Offspring of a clandestine union between a kṣatriya male and a female.

गोत्र – family race, lineage. "All persons who trace descent in an unbroken line from a common male ancestor." (P.V. Kane quoted by S.C. Banerji)

गोल/गोलक – Offspring of a clandestine union between a Brāhmaṇa widow and a Brāhmaṇa male.

चण्डाल/चाण्डाल – (i) The caste sprung from the union of शूद्र male and a ब्राह्मण female. (ii) Offspring of an unmarried woman. (iii) One born as a result of one's union with a सगोत्रा girl. (iv) son of one who after becoming an ascetic, turns back to the householder's life.

चातुर्मास्य – Name of the sacrifice performed every four months; ie. at the beginning of कार्त्तिक, फाल्गुन and आषाढ़ named वैश्वदेव, वरुण प्रघास and शाकमेध (with one शुनासीरीय)

चान्द्रायण – A form of penance in which the sinner is required to eat fifteen morsels of food on full Moon day, reduce the morsels by one on each day of the dark fortnight and to fast completely on the New Moon day. This is of many kinds, viz. पिपीलिकामध्य, यवमध्य, यतिचान्द्रायण and शिशु-चान्द्रायण.

चूड़ाकर्मन् (चूड़ाकरण / चूड़ा / चूड़) / चौलकर्मन् (चौल)– Tonsure. A sacrament in which the hair on a child's head is cut for the first time. Cūḍā means the tuft of hair kept on the head when the major part is shaved off.

छिन्नतन्तु – Without offspring or sonless. Such a person is destined to visit hall.

जातकर्मन् – A sacrament performed after the birth of a son to ensure his welfare.

जामि – Sister/A lady of the family/A lady with her husband alive.

ज्ञाति – A jnatic relation.

ज्योतिष्टोम – Name of a Soma sacrifice.

त्रसरेणु – "The mote or atom of dust moving in sun beam considered as an ideal weight of the lowest denomination (Monier-Williams).

त्र्यहाशौच – Impurity lasting for a period of three days.

दत्तक/दत्रिमपुत्र – An adopted son. A boy, who being given by his parents, is adopted by a person as a son.

दशकर्म – Fen sacraments or purificatory consecrations like गर्भधान पुसंवल सीमन्तोन्नयन, जातकर्मन् तिष्क्रमण, चुडाकरण, उपनयन, समावर्तन विवाह etc. one of the twelve kinds of sons.

दर्श – New moon (अमावास्या) day on which a sacrifice is performed. "The day on which the moon is seen only by the Sun and by no one else."

दान – Name of a political expedient (उपाय) by which a king pleases a hostile enemy by gift.

दाय – Inheritance/Ancestral property/Patrimony.

दायभाग – Partition of ancestral property.

दायाद – One entitled to a share of patrimony or inheritance.

दायाद-बान्धवs (०--बन्धुs) – Such बन्धु (kinsman) as are entitled to inheritance.

दिधिषु/दिधिषू – An elder sister before whom her younger sister has been married.

दिवाकीर्ति – (i) Caṇḍāla, (ii) Barber.

दिव्य – Divine proof.; e.g. of ordeal, fire, water etc.

दिव्यतीर्थ (दैवतीर्थ) – The tips of fingers, supposed to be sacred for offering to gods.

देवयज्ञ – Sacrifice to gods, specially the होम, one of the पञ्चमहायज्ञ.

दैवविवाह/देवकविवाह – One of the eight forms of marriage in which the father gives away his daughter after decking her with ornaments etc. to a priest who duly officials at a sacrifice, during the course of its performance.

देवयान – Way leading to the gods.

देवल/देवलक – (i) A Brāhmaṇa who performs the worship of an image for wages for three years and who thereby becomes unfit to officiate at Śrāddhas. (ii) One who maintains himself on the treasury of a shrine. (iii) Worshipper of Śiva for wages.

द्यामुष्यायण – A son of two fathers (so to say), usually it is the designation of an only son given in adoption with the stipulation that he will be treated as the son of both the natural father and the adoptive father and therefore will

offer पिण्ड to them after their death and be their heir. This designation is sometimes given to a क्षेत्रज or दत्तक or क्रीत sons also.

देवदासी – A female in the service of gods or temple. Female temple attendant. A courtezan employed as a dancer in a temple.

देहाशुद्धि – Notional impurity of the body for a period caused by the death of near relatives (e.g parents) or birth of a family member, rendering incligibility to perform काम्यकर्म during that period.

देवयजनोल्लेख – Digging out or boring (उल्लेख) of the sacrificial place (देवयजन)

धर्माध्यक्ष – One of the eighteen posts of high state functionaries in ancient India. Superintendent of religious affairs, the administrator of justice, a judice.

नक्त – (i) Night, a particular period of time. (ii) Taking food at night (only). There is difference of opinion on नक्त. Some say it is the time when stars begin to appear, while others hold that it is the time when only one मुहूर्त of the day remains.

नरक – Hell in general. Internal regions (corresponding to the realm of Pluto-V.M. Apte) there are said to be 21 different parts of these regions where different kinds of torture are inflictive upon the sinners. मनु names the following : १. तामिस्र, २. अन्ध तामिस्र, ३. महारौरव, ४. रौरव, ५. नरक, ६. कालसूत्र, ७. महानरक, ८. संजीवन, ९. महावीचि, १०. तपन, ११. सम्प्रतापन, १२. संधाता, १३. सकाकोल, कुडगाल, प्रेतिमुर्तिक, १४. वोहशंकु, ॠजीश,

१५. पन्था, शाल्मली, असिपत्रवन, लोहदारक. Yajnavalkya names पुतिमृत्तिका, लोहितोद, सविष, अवीचि, कुम्भीपाक, महानिरय, महापथ for 3,5,9,15,17,18 & 21 above.

नागरक – Town born, polite, courteous and gallant who shows exaggerated attention to his first mistress while he is quoting some one else. Vātsyāyana Kāmasūtra has elaborate discussion on नागरक.

नान्दीमुख – Designation of the पितृऽ (ancestors) in whose honour वृद्धिश्राद्ध or नान्दीश्राद्ध is performed.

नामकरण – The sacrament by which a child is given a name for the first time.

नास्तिक – (i) A theist or unbeliever. (ii) Denying the consequence of sacrificial work. (iii) One who speaks ill of the Vedas, Brāhmaṇas, Dharma etc. (iv) Denying the existence of future life after death.

निक्षेप – (i) A deposit entrusted to a man after counting the article in his presence. (ii) Deposit of one's articles with another through confidence. (iii) Delivery of one's articles to another for handing over to a third. It differed from आधि in that the former was not given by way of security for a debt or for collecting interest but in confidence for safe custody.

निबन्ध – Binding, tying, fastening etc. In Smṛti—it means a treatise (when referring to a text) or a grant of property (by the king). P.V. Kane (H. Dh. S. III) has enumerated four types of निबन्ध from old texts.

नियुक्त – A male appointed for the purpose set forth under नियोग.

नियोग – The system of levirate. Appointment of a wife

or widow to procreate son from intercourse with an appointed male, usually her brother in law younger than her husband.

निरग्नि/क – One having lost or neglected the consecrated fire.

निरय – Hell (in general).

निर्हरण – Carrying out dead bodies to be burnt, carrying corpses to the funeral pile. Taking forth, carrying or drawing out.

निर्हार – Taking away, removing, drawing out, extracting. Carrying out a dead body to be burnt. Accumulation of a private store of wealth, private hoard. Evacuation of the natural excrements of the body.

निवीती – One wearing the sacred thread, like a garland, round the neck.

निषाद – Offspring of the marriage of a ब्राह्मण with a शुद्र woman. Such a offspring is called पारशव. Acc. to गौतमधर्मसूत्र निषाद is the offspring of a ब्राह्मण from a वैश्य woman.

निषेक – The ceremony of impregnation.

नीलवृष – A bull of blue or dark colour specially used in वृषोत्सर्गश्राद्ध.

नैष्ठिक ब्रह्मचारिन्– A life long celibate.

न्यास – An open deposit for safe custody. Handing over to some member in the house an article in the absence of the head of the house for delivery to the head of the house. Mental appropriation or assignment of various parts of the body to tutelary deities. (Tantric)

पक्षिणी-अशौच – An impurity during a period marked by a pakṣiṇī i.e. the period of one night with one day immediately preceding it and one day immediately following.

पंक्तिदूषण/पंक्तिदूषक – One who defiles society and, as such, should not be associated with specially in community dinner times.

पंक्तिपावन/पंक्तिपावक – One who sanctifies society by his presence in such ceremonial associations as community dinner.

पञ्चगव्य – The five products of the cow, viz. milk, card, ghee, cow's urine and cow-dung—taken collectively and considered sacred and purifying.

पञ्च(महा) यज्ञ – The five religious acts to be performed by a householder viz. ब्रह्मयज्ञ (study of the Vedas), पितृयज्ञ (offering libasions of water to the manes), देवयज्ञ (=Homa), भूतयज्ञ (बलि or offering food etc. to birds, beasts etc.) & नृयज्ञ (hospitality).

पञ्चवर्ग – The five classes of spies—कापटिक (fictitious student), उदास्थित (an ascetic who has violated his vows), गृहपतिकव्यंजन (an agriculturist in distress), वैदेहकव्यंजन (a decayed merchant) & तापसव्यंजन (a rogue in the guise of a mendicant). These are collectively called संस्थ type of spies by Kauṭilya.

पञ्चसूना – [lit. 5 places of slaughter] The five things in a house by which animal life may be accidentally destroyed viz. the fireplace (चुल्ली), slab for grinding spices & condinents (पेषणी), broom (उपस्कर), pestle and mortar (कण्डनी) and water pot (उदकुम्भ). To remove the sin that may be incurred in these places a house holder was required to perform daily the five great sacrifices (पञ्चमहायज्ञ)

पञ्चाग्नि – The five sacred fires – गार्हपत्य, आहवनीय, दक्षिण, सभ्य & आवसथ्य.

पञ्चामृत – The five kinds of divine foods–दधि, दुग्ध, नवनीत, मधु and शर्करा (curd, milk, butter, honey & sugar)

पञ्चारूढ़ – A document signed by the creditor, debtor, two witnesses & the scribe.

पण्डक/षण्डक – A eunuch.

सावित्रीपतित/पतितसावित्रीक – One whose उपनयन has not been performed and who has no instruction in गायत्रीमन्त्र.

परिवित्त/परिवित्ति/परिविन्त – The unmarried elder brother whose younger brother is married.

परिवेत्ता/परिविन्दक – The younger brother marrying before the elder.

परिवेदन – The act of one's marrying before one's elder brother.

परिषत् – An assembly of learned and pious men for the removal of doubts about धर्म.

पवमानेष्टि – A sacrifice in which offerings are given to Agni invoked under the title of पवमान. It is done while kindling the sacred fire for a sacrifice.

पतित – fallen in social status. An apostate, degraded, ostracised.

पाकयज्ञ – A sacrifice in which cooked offerings are given–e.g. वैश्वदेव, बलि, श्राद्ध, अतिथिसेवा etc. According to गौतम –these are : अष्टका, पार्वण, श्राद्ध, श्रावणी, आग्रहायणी, चैत्री & आश्वयुजी.

पारशव – Offspring of a Brāhmaṇa from a śūdra woman, sometimes designated as निषाद.

पर्व(न्) - The eight four teenth days and the New Moon & full moon days of the fort nights and the संक्रान्ति day when the sun moves from one Zodiac to another.

पार्वण - Name of a kind of श्राद्ध done on पर्व days. The general ceremony of offering oblations to all the manes at a पर्वन्

पाषण्ड - Heretic

पाषण्डिन् - Heretics like the Buddhists.

पिण्ड - A ball or lump of rice offered to the manes at obsequial ceremonies or श्राद्ध.

पितृतीर्थ - The root of the finger called आदेशिनी (index finger)

पितृलोक - The world of the manes.

पितृयज्ञ - Obsequial offering. One of the पञ्चमहायज्ञs.

पितृपक्ष - The paternal side. Relatives by the father's side. The fortnight of the manes (ie. the dark fortnight of the month of भाद्रपद which is specially meant for offering obsequial rites to the manes).

पितृबन्धु - A kinsman by the father's side. [see Bandhu]

पुंसवन - A sacrament performed, before the throbbing of the facture in the womb, for obtaining a male child.

पुत् - A particular division of hell or the infernal regions to which male-childless persons are said, to be condemned.

पुत्रेष्टि - A sacrifice performed to obtain male issue.

पुत्रिकापुत्र/सुत - i) One's daughter's son appointed to be one's own son. (ii) One's daughter appointed as one's son.

पुनर्भू – Generally means a remarried widow. They are of seven types :

i) A girl who had once been promised to be given away in marriage,

ii) A girl round whose wrist the auspicious band was tied by the husband.

iii) A girl already intended to be given in marriage.

iv) A girl who had been given with water by the father.

v) A girl whose hand was held by the bridegroom.

vi) A girl who went round the fire.

vii) A girl who bore a child after marriage.

These girls are called *Punarbhū* when married to anothor person. Authorities, however, differ on the classification of them.

पैशाच – The basest and most sinful form of the 8 forms of marriage in which a man has sexual intercourse with a girl stealthily while she is asleep or under the influence of drug or liqueur.

पौनर्भव – Son of a girl called पुनर्भु

पौगण्ड – Young, not adult. Minor and therefore unfit for litigation.

प्रणव – The mystical and sacred syllable "om".

प्रत्ता – A girl given in marriage.

प्रतिलोम – The reverse order, usually applied to marriage between a male of the lower caste and a female of the higher caste.

प्रतिष्ठापद्धति – Procedure of installation of or consecration of an image or idol or temple etc.

प्रवर – Also called आर्ष or आर्षेय, it denotes one more illustrious ṛṣis who are the ancestors of a

person and are associated with his gotra. A muni or a noble ancestor who contributes to the credit of a particular gotra or a family. [lit. chief, eminent].

प्रशस्ति – Eulogy, laudation. A panegeric or poem written in praise of person (e.g. a patron).

प्राचीनावीती – One whose sacred thread hangs over the right shoulder and under the left arm.

प्राजापत्य (विवाह) – That form of marriages in which the father gives to girl after addressing the couple with the words may both of you perform your religious duties together and honouring the bridgroom with मधुपर्क etc.

प्राजापत्य (व्रत) – A mode of expiation described variously. According to Manu, it consists of four periods of three days each following one another in which there are respectively eating once only by day, once only by night, once only without asking for food and complete fast.

प्राड्विवाक – A judge in a law suit.

प्रायश्चित्त – Atonement, expiation, indemnification. A religious act to atone for a sin.

बन्धक – Pledge or mortgage.

बीजी – The owner or given of seed, the real progenitor (as aforesaid to क्षेत्री the nominal father or merely the husband of a woman).

बलिकर्मन् – Offering of food to birds, beasts etc.

बन्धु/बान्धव – Relatives, they are of three types :

a) आत्मबन्धु – Sons of one's father's sister, mother's sister and of one's maternal uncle–(i.e. the first cousin)

b) पितृबन्धु – Sons of one's father's father's sister, father's mother's sister

